# दर्शन-सिद्धान्त-मञ्जूषा

लेखक

पं० रङ्गनाथ पाठक

खड्गविलास प्रेस,

पटना

२६ जनवरी १९६१ मूल्यांक २)

श्रीकृष्णः शरणम् ॥

# प्राक्कथनम्

एकेनैव सुपुस्तकेन लघुना षड्दर्शनानां यदि ।
तत्त्वं ज्ञातुमयत्नतो हृदि भवेद् भाग्यादभीप्सोत्तमा ॥
तद्धीरङ्गविनिर्मिताऽतिरुचिरा पद्यावली-भूषिता ।
मञ्जूषेयमगाध-बोध-जननी स-प्रेक्षणीया बुधैः ॥

विदितमेवाऽत्रभवतां गीर्वाणवाणीरसिकानां विपश्चिन्मतल्लिकानां यद् धर्माऽर्थकाम-मोक्षाणां चतुर्विधानामपि पुरुषार्थानां मध्ये मोक्षएवात्यन्तिकः परमपुरुषार्थ इति। तदवाप्तिश्च श्रवणमनन-निदिध्यासनाधीनऽऽत्मसाक्षात्कारायत्तैवेति नाविदितं तत्रभवताम्। तत्र को मोक्षः, कश्च बन्धः, यस्मान्मोक्षोऽपेक्ष्यते, कथञ्च बन्धः किञ्च बन्धस्वरूपम् ? इत्यादि विचिकित्सायामेवाऽवतरन्ति सर्वाण्यपि दर्शनशास्त्राणि। यद्यपि सर्वेषां दर्शनकाराणां परस्परं विभिन्नमतिता प्रतिभासते तथाऽपि सूक्ष्मेक्षिकया निरीक्षणेन मोक्षे समुपयुज्यमानं चिदचिदात्मक-सकल प्रपञ्चजातस्य मूलतत्त्वाऽनुसन्धानमेवैकमुद्देश्यं सर्वदर्शनकाराणां प्रतीयते, इत्यत्रापि नास्ति कस्याऽपि विमतिः।

तत्रापि प्रतीयमानो मतभेदः मूलतत्त्वस्य स्वरूपविषये तत्र प्रमाण विषय एव च प्रतिभाति, नतु मूलतत्त्वस्यास्तित्वविषये कस्यापि विवादलेशोऽपि वर्तते। एवमेव मोक्षस्वरूपविषये तदवाप्त्युपायविषये च मतभेदस्य सत्वेऽपि आत्यन्तिक दुःखनिवृत्त्यात्यन्तिकसुखावाप्त्यन्यतररूपस्य तदुभयात्मकरूपस्य

वा मोक्षस्य सद्भावविषये नास्ति कस्यापि विमतिः।

मूलतत्त्वस्य ज्ञानमन्तरेण आविद्यक-बन्धस्याऽनिवृत्तौ परम-पुरुषार्थ-रूपस्य मोक्षस्यावाप्तिरपि न कथञ्चिद् भवितुमर्हतीत्यतएव मूलकारणस्य ज्ञानं नितरां मोक्षार्थिनामपेक्षितमिति निश्चित्य सर्वेऽपि दर्शनकाराः स्व-स्वमत्यनुसारं मूलस्वरूप दर्शितवन्तः स्वस्वतन्त्रे। सर्वेषां मतमविज्ञाय कस्य मतं सर्वाभ्यर्हितम सर्वोपादेयञ्चेति निर्णेतुं न कश्चिदपि शक्नोत्यतः सर्वेषां मतं जिज्ञास्यकोटौ प्रविष्टम्।

परन्तु तत्तच्छास्त्राणां बहुलतया दुरूहत्वेनाऽनवगाहतया च सुकुमारतीनामाधुनिकच्छात्राणां प्रवेशस्तत्र न कथमपि भवितुमर्हतीति नाऽविदितं पण्डितमण्डलीमण्डनानाम्। अतएव जिज्ञासूनां छात्राणामुपकृतये सरलसंस्कृतवाक्यमयस्य सकल-दार्शनिकमतप्रतिपादकस्य सुबोधस्य सुप्रवेशस्य लघुकायस्यैकस्य पुस्तकस्यावश्यकतामाकलय्य प्रवृत्तोऽहमस्य पुस्तकस्य निर्माणे।

गद्ये लिखेयं पद्ये वेति विकल्पसमुपस्थितौ विचारितवान् यत् गद्ये लेखने स्वाभिप्रायस्य प्रकाशने यद्यपि सौकर्य्यमस्ति, तथापि गद्यानामकंठस्थीभूतानामर्थज्ञानं पाठकाले जातमपि चिरस्थायि न भवति। पद्यानितु पञ्चषवारपठनेनैव कण्ठ-स्थानि भवन्ति, कण्ठस्थितानाञ्चतेषामर्थोऽपि सुतरां परिस्फुरति। किञ्च पद्ये एतादृशं पुस्तकमपि न मया किमप्यव-लोकितं यत्र सर्वदर्शनकाराणां मतमेकत्रोपलभ्येत, अतः पद्ये एव लेखितुं प्रवृत्तः तदभावपूत्यर्थमपि।

कतिपय पद्यानि विरचय्य समाराध्यचरणान् गुरुवर

श्रीहरिशङ्करशर्मपाण्डेमहोदयान् दर्शितवानपि। तैश्च महानुभावैः समवलोक्य भृशं प्रसद्य साशीर्वादोत्साहप्रवर्धकवचोभिस्तथाऽहमुत्साहितः येन प्रवृद्धद्विगुणितोत्साहो निर्बलशरीरोऽपि तत्कृपैकबलः समापितवानल्पकालेनैवेदं पुस्तकाकारम्। अन्तेऽपि श्रीगुरुवरैव आद्योपान्तं दृष्टिपूतं विधाय लघुदर्शनसिद्धान्तमञ्जूषा इति नामकरणसंस्कारकरणेनास्य गौरवं वर्धितम्। अस्योपादेयत्वे ममप्रयत्नसाफल्ये च गुणैकपक्षपातिनः सहृदयाः विद्वांसः पाठका एव निर्णायका भविष्यन्तीति नाहमत्र किञ्चिद्वक्तुमुत्सहे।

अत्र मानवसुलभप्रज्ञापराधाद् दृष्टिदोषाद् हस्तदोषान्मुद्रणदोषाद्वा याः काश्चनाऽशुद्धयोऽवशिष्टाश्चेत्ताः संशोध्य कृपया सूचयतां महानुभावानामुपकारभारमावहन् पुनर्मुद्रणे तन्मार्जयितुं प्रयतिष्ये। पुस्तकमिदमवलोक्य ये महानुभावाः प्रसद्य ममोत्साहं वर्धितवन्तः तेषां नामप्रकाशनं स्वकर्तव्यमिवाभाति।

पटनाविश्वविद्यालयस्य भूतपूर्वसंस्कृताध्यापकाः स्वर्गीय पं० देवदत्तत्रिपाठिमहोदयाः एकौना वरहरा निवासिनः पं० रामदेव त्रिपाठी महोदयास्ते पुस्तकाकारमिदमवलोक्य भृशं प्रसन्नाः ममोत्साहं वर्धितवन्तः, इति तेभ्यो दिवंगतात्मभ्यो महानुभावेभ्यः श्रद्धाञ्जलिमर्पयामि। अन्येऽबोल्लेख्यनामानः—सोदफलपुरस्थ—धर्मसमाज संस्कृ० महाविद्यालयस्य भूतपूर्वप्राचार्या ओझोपाह्वश्री धर्मराजशर्मपण्डितमहोदयाः, उक्तमहाविद्यालये व्याकरणस्य प्रधानाध्यापका पं० परमेश्वरदत्त त्रिपाठिनः, पटना संस्कृत महाविद्यालयस्य दर्शनशास्त्रप्राध्यापका

ओझोपाख्य पं० श्रीकेदार नाथ शर्ममहोदयाः तथा पाटलिपुत्र-स्थ हथुआराज संस्कृतविद्यालयस्य भूतपूर्व प्रधानाध्यापकाः पं० रघुवंशत्रिपाठिमहोदयाः, छपरानिवासिनः पं० कामताप्रसाद पाण्डेयमहोदयाः मैनपुरानिवासी रामजन्म शर्म्मा पुस्तक-मिदमवलोक्य भृशं प्रसन्नाः ममोत्साहं वर्धितवन्तः इति तेषां कृते धन्यवादान् समर्पयन् आत्मनः कृतज्ञतामावेदयामि। ममग्रामनिवासी सज्जनः श्री शिवनारायण प्रसाद महोदयः श्रीग्रंथप्रकाशनार्थं यत्किञ्चित्साहाय्यं कृतवान् तदर्थमिमं महानुभावमपि साशीर्वाद धन्यवादैः सम्भावयामि। प्रसिद्ध डाक्टर श्रीरघुनाथशरण महोदयस्य ज्यायस्या कन्यया इन्दुकुमारीति नाम्न्या बी० ए० परीक्षामुत्तीर्णया एका मसिगर्भा लेखनी मह्यं प्रदत्ता, यया एकयैव मया पञ्च पुस्तकानि लिखितानि तदर्थमेनां महोदयामपि आशीर्वादैः संभावयामि।

अन्ते च येषां परमौदार्य्येण मुद्रितमिदं पुस्तकं भवतां हस्ते विराजते तेभ्यः देशसेवापरायणेभ्यः परमोपकारिभ्यो महानु-भावेभ्यः श्रीशार्ङ्गधर सिंह महोदयेभ्यः तदभिन्नमित्रेभ्यः श्रीकेदारनाथ चतुर्वेदि महोदयेभ्यश्च हार्दिकाशीर्वादधन्यवा-दान् समर्पयन्नात्मनः कृतज्ञताञ्च प्रकटयन् तेषामविस्मरणीय मुपकारभारमावहामि।

विदुषां कृपार्हः,

रङ्गनाथपाठकः

शाहाबादमण्डलान्तर्गत एकवनाग्रामवास्तव्यः,

प्रधानाध्यापक,

सं० सञ्जीवनविद्यालय, चिरैयाटाँड़, पटना

॥ श्रीकृष्णश्शरणम् ॥

श्रीगणेशाय नमः

श्रीगणेश-चरणाम्बुजद्वयं विघ्नराशिशमनार्थमद्वयम् ।
सर्वदेवमुनिवृन्दवन्दितं भावयामि हृदि सर्वसिद्धिदम् ॥ १ ॥

यो वेदैरखिलैर्विमर्शनपरैः संमृग्यतेऽहर्निशम्
यद्ध्यानार्पितमानसा ऋषिगणा नाद्याऽपि पारं गताः ।
यत्पादाम्बुजनावमाप्य सुधियस्तीर्णाः भवाब्धिं परम् ।
तं कृष्णं हृदि भावयामि सततं सत्यं शिवं सुन्दरम् ॥ २ ॥

ध्यात्वा गुरुपदाम्भोजं पित्रोश्च चरणौ हृदि ।
लघ्वी दर्शनसिद्धान्त-मञ्जूषैषा विरच्यते ॥ ३ ॥

## दर्शनं तद्भेदे कारणञ्च

अथ दर्शनशब्दस्य तात्पर्यं सम्प्रदर्श्यते ।
किञ्च दर्शन-भेदस्य कारणञ्चेति प्रोच्यते ॥ ४ ॥
दृश्यतेऽस्य प्रपञ्चस्य मूलकारणमच्युतः ।
सच्चिदानन्दरूपोऽसौ येन तद्दर्शनं स्मृतम् ॥ ५ ॥

अथवा मूलतत्त्वस्य ज्ञाने यदुपयुज्यते ।
तच्चाऽपि दर्शनं केचित् प्रवदन्ति मनीषिणः ॥ ६ ॥
आत्मा द्रष्टव्य इत्यादि श्रुतिवाक्यविमर्शनात् ।
आत्मसाक्षात्कार एव पुरुषार्थोऽभिधीयते ॥ ७ ॥

श्रवणं मननञ्चापि निदिध्यासनमेव च ।
तत्साक्षात्कारसिद्ध्यर्थं श्रुत्या हेतुत्रयं स्मृतम् ॥ ८ ॥
श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्यानं निदिध्यासनमुच्यते ॥ ९ ॥

आत्मसाक्षात्कार एव दर्शनानां प्रयोजनम् ।
तेनात्मसाक्षात्कारस्य करणं दर्शनं मतम् ॥१०॥
एवं दर्शनशब्दस्य व्युत्पत्तिः सम्प्रदर्शिता ।
दर्शनानाञ्च भेदस्य कारणं प्रोच्यतेऽधुना ॥११॥

गूढार्थत्वाच्छ्रुतीनां वै भिन्नत्वाच्च रुचेर्नृणाम् ।
द्रष्टृणां मतिबाहुल्याद् दर्शने भेदसम्भवः ॥१२॥

सम्भाषिताः यथा येषां श्रुत्यर्थाः सुविनिश्चिताः ।
ते तथैवाऽलिखन् स्वे स्वे तन्त्रे नात्राऽपि संशयः ॥१३॥

को वा विद्वान् कथं किं वाऽमन्यत स्वीयदर्शने ।
तत्सर्वं दर्शयिष्यामि तत्तद्वस्तु-विवेचने ॥१४॥
दर्शनाम्भोधिरत्यन्त-गम्भीरो वर्ततेतराम् ।
साधारण-मतीनाञ्च प्रवेशस्तत्र दुर्लभः ॥१५॥

अतस्तत्र प्रवेशस्य सौलभ्याय विपश्चिताम् ।
तं तं पदार्थं संक्षिप्य मतभेदोऽपि दर्श्यते ॥ १६ ॥

उद्देश्यं सर्वशास्त्राणामेकमेवहि विद्यते ।
चिदचिद्वर्गजातस्य मूलकारणदर्शनम् ॥ १७ ॥

अस्तित्वे मूलतत्त्वस्य न विवादोऽस्ति कस्यचित् ।
तत्स्वरूपे प्रमाणे च विवदन्ते समे बुधाः ॥ १८ ॥

अव्यक्तत्वेन कस्याऽपि नेन्द्रियस्य स गोचरः।
अतः शब्दाऽनुमानाभ्यां साध्यते सूक्ष्मदृष्टिभिः॥ १९॥
प्रमाणसिद्धं यद्वस्तु तत्प्रमेयं निगद्यते।
अतः प्रमाणविषयेऽध्याये किञ्चित्प्रदर्श्यते॥ २०॥

इति प्रथमोऽध्यायः।

## प्रमाणविचारः

मानाधीना मेयसिद्धिरिति सर्वव्यवस्थितेः।
प्राक् प्रमाणस्य विषये यत्किञ्चिदिह दर्श्यते॥ १॥
प्रमितेः करणं यच्च तत्प्रमाणं निगद्यते।
यथार्थज्ञानमेवाऽत्र प्रमितिः प्रोच्यते बुधैः॥ २॥
चार्वाकाणां मते तावत् यथार्थज्ञानसाधनम्।
प्रत्यक्षमेकमेवास्ति प्रमाणं सर्वसम्मतम्॥ ३॥
विषयेन्द्रिय-सम्बन्धाज्ज्ञानं यज्जायतेतराम्।
तत्प्रमेत्युच्यते सर्वैश्चार्वाकमतवर्तिभिः॥ ४॥
तद्भिन्नन्तु प्रमैवेति नावगन्तुं सुशक्यते।
चक्षुरादीन्द्रियैरेव ग्राह्योऽर्थः सत्य उच्यते॥ ५॥
श्रोत्रेन्द्रियं शब्दमात्रं प्रबोध्यैव गतार्थकम्।
नार्थं बोधयितुं सत्यं प्रभवेद् वै कथञ्चन॥ ६॥
अनुमानादिकं किञ्चित् प्रमाणं नैव विद्यते।
इति सर्वं मयाऽलेखि सम्यक् चार्वाकदर्शने॥ ७॥

अनुमानं सदा व्याप्ति-ज्ञानाधीनं समिष्यते ।
व्याप्तिज्ञानञ्च केनाऽपि कथञ्चिदपि दुर्घटम् ॥ ८ ॥

यत्र यत्र च धूमोऽस्ति तत्र तत्राग्निरिष्यते ।
इत्येवं साहचर्यस्य नियमो व्याप्तिरुच्यते ॥ ९ ॥

अतीताऽनागतादीनां धूमाग्नीनां कथञ्चन ।
कदाचित्कस्य जन्तोस्तु ज्ञानं नैव प्रजायते ॥ १०

साम्प्रतं वर्तमानाः याः धूमाग्नि-व्यक्तयः समाः ।
तासामपीन्द्रियैः साकं संबन्धो नैव विद्यते ॥ ११ ॥

तथा च सकले धूमे वह्नौ व्याप्तिर्हि विद्यते ।
इत्येवं निश्चयः कर्तुं न केनाऽपीह शक्यते ॥ १२ ॥

अनुमानेन सकल-धूमाग्नि-ज्ञान-संभवः ।
इति चेत्पुनरेवाऽत्र व्याप्त्यपेक्षाऽनवस्थितिः ॥ १३ ॥

एवञ्च चार्वाकनये प्रत्यक्षादपरं नहि ।
प्रमाणं विद्यते किञ्चिदिति शास्त्रेषु निश्चितम् ॥ १४ ॥

प्रत्यक्षमनुमानञ्च प्रमाणं द्विविधं तथा ।
स्वीकुर्वन्ति महा-प्राज्ञाः सर्वे बौद्धास्तथार्हताः ॥ १५ ॥

कार्यकारणभावं ते साधयन्त्यग्निधूमयोः ।
अन्वय-व्यतिरेकाभ्यां बौद्धा जैनाश्च पण्डिताः ॥ १६ ॥

कार्यकारणभावे तु निश्चिते वह्निधूमयोः ।
व्यभिचारस्य शङ्कैव नोदेतीह कथञ्चन ॥ १७ ॥

व्यभिचारस्य शङ्कायां निरस्तायाञ्च सर्वथा ।
व्याप्तेश्च निश्चयः सम्यग् सुलभः संभविष्यति ॥ १८ ॥

वैशेषिकैरपि तथा नैव शब्दोपमानयोः ।
अनुमानगतार्थत्वात् प्रामाण्यं मन्यतेतराम् ॥ १९ ॥
प्रत्यक्षमथ शब्दश्च प्रमाणद्वयमेव हि ।
मन्यन्ते तु महाप्राज्ञा माध्वाः वेदविदां वराः ॥ २० ॥

अनुमानस्य तस्यैव प्रामाण्यं मन्वते हि ते ।
यत्तु शब्दप्रमाणेन बोधितार्थाऽवबोधकम् ॥ २१ ॥
नेतरस्याऽनुमानस्य प्रामाण्यं मन्यते हि तैः ।
अत एवास्य प्रामाण्ये गणना न पृथक् कृता ॥ २२ ॥

प्रत्यक्षमनुमानञ्च शब्दश्चेदि यथाक्रमम् ।
श्रीमद्रामानुजाचार्यैः प्रमाणत्रय माद्रितम् ॥ २३ ॥
शब्दानुमान-प्रामाण्य-विषये तन्मते हि सः ।
शब्दोऽनुमानस्यापेक्षां कुरुते न कदाचन ॥ २४ ॥

नानुमानञ्च शब्दस्याऽपेक्षि संविद्यते क्वचित् ।
स्वातन्त्र्येण तयोः किन्तु प्रामाण्यं सम्यगिष्यते ॥ २५ ॥

एवदेव त्रिकं सर्वैः सांख्यैः पातञ्जलैस्तथा ।
प्रमाणं मन्यते तावज्जरन्नैयायिकैरपि ॥ २६ ॥

उपमानेन सहितं त्रिकञ्चेति चतुष्टयम् ।
प्रमाणं मन्वते सर्वैऽर्वाञ्चोऽपि न्यायकोविदाः ॥ २७ ॥

अपि माहेश्वराः सर्वे उक्तमेव चतुष्टयम् ।
प्रमाणं मन्वते नान्यदिति तच्छास्त्रविन्मतम् ॥ २८ ॥

मीमांसकविशेषाश्च प्रभाकरमतानुगाः ।
अर्थापत्त्या समञ्चैतत् पञ्चकं मानमब्रुवन् ॥ २९ ॥

मीमांसकविशेषाणां भाट्टानाञ्च मते तथा ।
साऽनुपलब्धि तत्षट्कं प्रमाणं सुव्यवस्थितम् ॥ ३० ॥
एतानि षट् प्रमाणानि सम्मतानि विपश्चिताम् ।
वेदान्तिनां तथा सर्वाऽद्वैतवेदान्तिनामपि ॥ ३१ ॥
ऐतिह्यसम्भवाभ्यान्तु युक्तान्येतानि षट् क्रमात् ।
अष्ट प्रमाणानीष्टानि पौराणिकविपश्चिताम् ॥ ३२ ॥
तान्त्रिकाणान्तु चेष्टाऽपि प्रमाणत्वेन सम्मता ।
एष प्रमाणसंख्यायां मतभेदः प्रदर्शितः ॥ ३३ ॥
मतभेदः प्रमाणस्य संख्यायामेव विद्यते ।
प्रमेयसत्यतायान्तु विवादो नास्ति कस्यचित् ॥ ३४ ॥
शब्द प्रमाणकैर्योऽर्थः शब्देनैव प्रसाध्यते ।
सोऽर्थोऽनुमानेनैवाऽत्र साध्यते किल तार्किकैः ॥ ३५ ॥
दिवा न भुङ्क्ते पीनोऽयमत्रार्थापत्ति मानतः ।
रात्रिभोजनरूपोऽर्थः साध्यो वेदान्तिभिश्च यः ॥ ३६ ॥
स एवार्थोऽनुमानेन साध्यते किल तार्किकैः ।
अतः प्रमेय-सत्यत्वे न विवादोऽस्ति कस्यचित् ॥ ३७ ॥
वेदान्तिभिर्घटाभावोऽनुपलब्ध्या प्रसाध्यते ।
प्रत्यक्षेणैव सोऽप्यर्थस्तार्किकैरपि गृह्यते ॥ ३८ ॥
अतः प्रमेयसत्यत्वे न विवादोऽस्ति कस्यचित् ।
अतः प्रमाणसंख्यायां विवादोऽस्त्येव निष्फलः ॥ ३९ ॥
अतएव पाणिनीयाः प्रमाणविषये स्वयम् ।
उदासीना हि तिष्ठन्ति शुष्कवादभयात्पुनः ॥ ४० ॥

## प्रमाणेषु परस्परसंबन्धः

अथ प्रसङ्गात् किं कस्य प्रमाणस्य समिष्यते ।
प्राणप्रदं तथा कस्य चोपजीव्यं किमुच्यते ॥ ४१ ॥
किमनुग्राहकं कस्य कस्य किं पार्षदं मतम् ।
इत्येवं शिचिकित्सायामत्र किञ्चिद्विचार्य्यते ॥ ४२ ॥

यन्मानस्य प्रामाण्यं यन्मानाधीनमिष्यते ।
तन्मानं तत्प्रमाणस्य प्राणप्रदमुदीरितम् ॥ ४३ ॥
यथा श्रुतिप्रमाणस्य प्रामाण्यं न्यायदर्शने ।
अनुमानप्रमाणस्यायत्तं न्यायविदो विदुः ॥ ४४ ॥
स्वतः प्रमाणसिद्धो यः सर्वज्ञः परमेश्वरः ।
तत्प्रणीतत्वहेतोश्च श्रुतेः प्रामाण्यमाश्रितम् ॥ ४५ ॥

अतः श्रुतिप्रमाणस्याऽनुमानं प्राणदं मतम् ।
यथा स्मृतिप्रमाणस्य प्राणदा श्रुतिरुच्यते ॥ ४६ ॥
लब्धप्रामाण्यमानस्य यस्य साधनमिष्यते ।
आयत्तं यत्प्रमाणस्य चोपजीव्यं तदुच्यते ॥ ४७ ॥

यथा प्रत्यक्षभिन्नानां प्रमाणानां हि साधनम् ।
प्रत्यक्षस्यैव मानस्याऽऽयत्तं सर्वैः समुच्यते ॥ ४८ ॥
यथाऽग्नेरनुमानस्य धूमज्ञानं हि साधनम् ।
तत्प्रत्यक्षप्रमाणस्याऽयत्तं सर्वैः समुच्यते ॥ ४९ ॥

यथा च शाब्दबोधस्य शब्दज्ञानं हि कारणम् ।
प्रत्यक्षश्रावणस्यैवाऽऽयत्तं तद्वर्ततेतराम् ॥ ५० ॥
अनुमानादि-मानानामवएव हि कारणात् ।
उपजीव्यन्तु प्रत्यक्षं वर्तते नाऽत्र संशयः ॥ ५१ ॥

सम्यक्प्रामाण्यमानस्योपपत्त्यवधनस्य च ।
तत्प्रमाणस्य स्वीकारे तत्साहाय्यं करोति वै ॥ ५२ ॥
तत्प्रमाणान्तरं तस्य प्रमाणस्याऽनुग्राहकम् ।
यथा श्रुत्याऽनुगृह्यन्तेऽनुमानान्यात्मनिर्णये ॥ ५३ ॥

'आत्मा मन्तव्य' इत्यादि-श्रुत्यात्मविषयस्य वै ।
मननेनाऽनुमानस्य ग्राह्यता बोध्यते यथा ॥ ५४ ॥
क्वचिद् विशेषविषये तत्प्रमाणं प्रवर्तते ।
मानान्तरं पुरस्कृत्य तत्प्रमाणं हि पार्षदम् ॥ ५५ ॥
मानान्तरञ्च तत् तत्राऽग्रेसरं समुदाहृतम् ।
यथेश्वराद्यचिन्त्येषु नाऽनुमानगतिः पुरा ॥ ५६ ॥
श्रुत्या प्रदर्शिते मार्गेऽनुमानन्तु प्रवर्तते ।
अतस्तत्राऽनुमानं हि श्रुतेः पार्षदमुच्यते ॥ ५७ ॥

एवमत्र प्रमाणेषु सम्बन्धो दर्शितो मिथः ।
बाध्यबाधकभावेऽपि तत्र किञ्चिद्विचार्यते ॥ ५८ ॥
मिथो विरोधिमानानां सन्निपाते क्वचित्स्थले ।
किं कस्य बाधकमिति सर्वमत्र विचार्यते ॥ ५९ ॥

अमुकस्य प्रमाणस्याऽमुकं बाधकमेव हि ।
नायं लोकेऽस्ति नियमः इत्येवमत्र धार्यताम् ॥ ६० ॥
नेत्रदोषादिना सर्प-प्रत्यक्षं यत्तु जायते ।
आप्तवाक्येन तद्बाध्यं भवत्येव न संशयः ॥ ६१ ॥

क्वचिदुन्मादसत्वे च नायं सर्पः यदुच्यते ।
तद्दृष्टलोचनेनाऽहि-प्रत्यक्षेणैव बाध्यते ॥ ६२ ॥

अन्यथाऽसिद्धमेवाऽऽद्यं बाध्यं भवति निश्चितम् ।
आद्ये सर्पस्य प्रत्यक्षं दोषजन्यं हि विद्यते ॥ ६३ ॥

अन्यथासिद्धमेवातः कारणाद्वर्ततेतराम् ।
द्वितीयोदाहृतौ 'नायं सर्पः' इत्यादि भाषणम् ॥ ६४ ॥

उन्मादद्दोषजन्यत्वादन्यथासिद्धमेव तत् ।
समत्वं दोषजन्यत्वे उभयोरपि वर्तते ॥ ६५ ॥

प्रोक्तरीत्या प्रमाणेषु मतभेदोऽस्ति यद्यपि ।
तथापि लोके त्रौस्येव प्रमाणानीति दृश्यते ॥ ६६ ॥

प्रत्यक्षमनुमानञ्च शब्दश्चेति त्रयं किल ।
प्रयुज्यमानं सर्वत्र व्यवहारेषु दृश्यते ॥ ६७ ॥

इतरेषां प्रमाणानां त्रिष्वन्तर्भाव इष्यते ।
बाध्यबाधकभावस्याऽप्यन्तर्भावानुसारतः ॥ ६८ ॥

यस्मिन् प्रमाणे यस्यास्ते ह्यन्तर्भावः सुनिश्चितः ।
तद्वत् प्राबल्यदौर्बल्ये तस्याऽपीष्टे यथाक्रमम् ॥ ६९ ॥

प्रत्यक्षापेक्षया यत्राऽनुमानं दुर्बलं भवेत् ।
अर्थापत्तिप्रमाणञ्च दुर्बलं तद्वदिष्यते ॥ ७० ॥

पर्वतेऽग्नेरभावश्च प्रत्यक्षेणावगच्छति ।
यो नरस्तस्य पुरतोऽप्यनुमानञ्च दुर्बलम् ॥ ७१ ॥

तत्रापि दोषजन्यत्वेनान्यथासिद्धभावतः ।
धूल्यां धूम-भ्रमो दोषः वृत्ते व्याप्ति-भ्रमोऽथवा ॥ ७२ ॥

पर्वतेऽग्नेरभावस्य प्रत्यक्षं यदि दोषजम् ।
दोषाऽजन्यादनुमानात्तत् प्रत्यक्षमपि दुर्बलम् ॥ ७३ ॥

एवं दर्शनभेदेन प्रमाणेष्वपि भिन्नता।
बाध्यबाधक भावे च बीजं सम्यक् प्रदर्शितम् ॥ ७४ ॥

## प्रमाणसाध्यं प्रमेयम्

अधुना तेन मानेन किं साध्यं भवतीत्यपि।
प्रदर्श्यते यथा शास्त्रं जिज्ञासुज्ञानहेतवे ॥ ७५ ॥
किञ्चिद्वस्तु प्रमाणं नो समुत्पादयते क्वचित्।
पूर्वसिद्धञ्च सद्वस्तु तदित्थं बोधयत्यदः ॥ ७६ ॥
प्रमाणेन च यत्साध्यं तत्प्रमेयं निगद्यते।
तच्चापि द्विविधं ज्ञेयं चेतनाऽचेतनात्मकम् ॥ ७७ ॥
सर्वञ्चाऽचेतनं वस्तु चेतनाधीनमिष्यते।
तेन चेतनमेवादौ विचारार्हं समुच्यते ॥ ७८ ॥
द्विविधं चेतनञ्चापि जीव-ब्रह्मविभेदतः।
जीवस्य ब्रह्माधीनत्वात् पूर्वं ब्रह्म विचार्यते ॥ ७९ ॥
तथा च पूर्वं जिज्ञास्ये ब्रह्मणि कथमिष्यते।
पूर्वोक्तानां प्रमाणानां कथा च त्रिधया गतिः ॥ ८० ॥
स्वोपजीव्यं सर्वेषां प्रमाणानामपि स्वयम्।
प्रमाणातीतमेवेदं ब्रह्म श्रुत्या निरूप्यते ॥ ८१ ॥
यानि लब्धात्मभावानि प्रमाणानि च ब्रह्मणा।
प्रवर्तेरन् कथं तानि स्वोपजीव्ये हि ब्रह्मणि ॥ ८२ ॥
यथा वायोः समुद्भूतः स्वोपजीव्यं कदाचन।
प्रकाशयति नो वह्निः स्वोपजीव्य-विरोधतः ॥ ८३ ॥

यतो ब्रह्मणि नैवास्ति प्रमाणानां गतिः क्वचित् ।
अतः प्रमाणातीतं तद् ब्रह्म सर्वैः समुच्यते ॥ ८४ ॥
न च प्रमाणासिद्धत्वात् खपुष्पस्येव ब्रह्मणः ।
असत्त्वमेवापद्येत तस्मादेवं समुच्यते ॥ ८५ ॥
असत्त्वे ब्रह्मणो नूनं प्रमाणानामसत्यता ।
समापतेदतस्तस्याऽस्तित्वं स्वीक्रियते सभैः ॥ ८६ ॥
प्रमाणाऽविषयत्वेऽपि शास्त्रतत्त्वविमर्शिभिः ।
प्रमाणकारणत्वेन ब्रह्मणः सिद्धिरादृता ॥ ८७ ॥
शास्त्रे प्रमाणसिद्धत्वं द्विविधं वस्तुनो मतम् ॥
प्रमाणकारणत्वेन प्रमाणविषयत्वतः ॥ ८८ ॥
प्रमाणकारणत्वञ्च निर्विशेषस्य ब्रह्मणः ।
प्रमाणविषयत्वन्तु भूतभौतिकवस्तुनः ॥ ८९ ॥
एवं प्रमाणविषये सर्वशास्त्रकृतां मतम् ।
प्रदर्शितं यथाशास्त्रं ज्ञातव्यं सद्विशेषतः ॥ ९० ॥

इति द्वितीयोऽध्यायः ।

## ईश्वरः

अथेश्वरस्य विषये यथाशास्त्रं यथाश्रुतम् ।
जिज्ञासूनां सुबोधाय यत्किंचिञ्चिदिह दर्श्यते ॥ १ ॥
चार्वाका ईश्वरं नैव मन्यन्ते हि कथञ्चन ।
यतः प्रत्यक्षभिन्नानां प्रामाण्यं मन्यते न तैः ॥ २ ॥
अतोऽनुमानशब्दाभ्यां सिद्धमीशं न मन्वते ।
प्रत्यक्षेण च नो कश्चिदीश्वरो लक्ष्यते क्वचित् ॥ ३ ॥

यदि स्यादुपलभ्येत केनचित् कर्हिचित् कचित् ।
नोपलब्धस्तु केनाऽपि तेनेशो नैव सिध्यति ॥ ४ ॥

शुभानामशुभानाञ्च लौकिकानां हि कर्मणाम् ।
लोकप्रसिद्धो राजैव फलदाता न चापरः ॥ ५ ॥
पारलौकिक-कर्माणि यज्ञदानादिकानि तु ।
असिद्धेः परलोकस्य व्यर्थान्येवेति ते विदुः ॥ ६ ॥

मृदम्बुसन्निधानेन बीजादङ्कुरसम्भवः ।
कर्तारमनपेक्ष्यैव स्वभावादेव जायते ॥ ७ ॥
बौद्धाः सर्वज्ञसुगत-व्यतिरिक्तं न कञ्चन ।
मन्यन्त ईश्वरं सर्वे बुद्ध एव तदीश्वरः ॥ ८ ॥

अर्हन्नेवहि जैनानां सर्वज्ञो मुनिरीश्वरः ।
एषां मतेऽपि नो कश्चिदन्यः सर्वज्ञ इष्यते ॥ ९ ॥
सांख्याः जीवातिरिक्तं नो मन्यन्ते जगदीश्वरम् ।
दृश्यमानं जगत्सर्वं मूलप्रकृतिसम्भवम् ॥ १० ॥

पुरुषस्य च सान्निध्यात् कर्त्री प्रकृतिरीष्यते ।
निर्लेपः पुरुषो द्रष्टा प्रकृतिस्तु जडा मता ॥ ११ ॥
सांख्ये पुरुषशब्देन जीव एवाऽभिधीयते ।
वदन्ति तस्य नानात्वं सांख्यशास्त्रविशारदाः ॥ १२ ॥

मीमांसक-मतेऽप्यस्ति कर्मैव फलदं ध्रुवम् ।
तेन कर्मातिरिक्तो नो कश्चिदीश्वर इष्यते ॥ १३ ॥
अनादि-निधनां नित्यां मूलाधारे स्थितां पराम् ।
वाचमेवेश्वरं प्राहुः वैयाकरणपण्डिताः ॥ १४ ॥

स्फोटब्रह्मेति तं केचिच्छब्दब्रह्मेति चापरे ।
मन्यन्ते सकलं तस्य विवर्तं जगदिष्यते ॥ १५ ॥
जीवातिरिक्तो जीवान्तर्यामी जीवनियामकः ।
रामानुजार्यवर्याणां मते ईश्वर इष्यते ॥ १६ ॥

जडवर्गो जीववर्गः शरीरं तस्य चेष्यते ।
तच्छरीरविशिष्टोऽसावीश्वरोऽद्वैत इष्यते ॥ १७ ॥
जीवकृतस्य पुण्यस्य पापस्यापि च कर्मणः ।
कर्मापेक्ष्य फलं दत्ते भगवानयमीश्वरः ॥ १८ ॥

अनुकूलं हि यज्ज्ञानं तदेवानन्दमुच्यते ।
तेन ज्ञानस्वरूपोऽयमानन्दमय उच्यते ॥ १९ ॥
ज्ञानादीनां गुणानाञ्च परमात्माऽयमाश्रयः ।
स्वरूपभूताज्ज्ञानात्तद् गुणभूतन्तु भिद्यते ॥ २० ॥

जगद्रूपस्य कार्यस्य चोत्पत्तावयमीश्वरः ।
कारणं भवति त्रेधा श्रीरामानुजदर्शने ॥ २१ ॥
बहु स्यामिति संकल्प-विशिष्टं परमेश्वरम् ।
निमित्त कारणं प्राहुः विशिष्टाद्वैतवादिनः ॥ २२ ॥

सूक्ष्मं यच्चिदचिच्चेति शरीरं ब्रह्मणः स्वकम् ।
तद्विशिष्ट उपादानमीश्वरः परिकीर्तितः ॥ २३ ॥
ज्ञानशक्ति-विशिष्टः सन् कारणं सहकारि च ।
भाष्ये तत्त्वत्रयस्येदं विस्तरेण प्रपञ्चितम् ॥ २४ ॥

यथा शरीरस्यान्तः स्थः सूक्ष्मो जीवो नियामकः ।
जीवस्याऽपि तथान्तः स्थः सूक्ष्म ईशो नियामकः ॥ २५ ॥

तत्रापि पूर्णशक्तित्वात् सर्वांशेन नियामकः ।
चिदचिद्वर्गजातस्य सत्र-कायस्य महेश्वरः ॥ २६ ॥

जीवश्चाऽपूर्णशक्तित्वात् कात्स्न्र्येन न नियामकः ।
शरीरस्येति विज्ञेयो विशेष उभयोरपि ॥ २७ ॥

यदृच्छया नियन्तुं स शक्तोऽपि परमेश्वरः ।
कर्मानुसारेणैवैषां जीवानां स नियामकः ॥ २८ ॥

अतो हि समदर्शित्वमीशस्य न विहन्यते ।
उच्चावचेषु भोगेषु विद्यमानेषु संसृतौ ॥ २९ ॥

नोपादानं हि जगतः कारणं जगदीश्वरः ।
निमित्त कारणं किन्तु प्रोच्यते तन्मतानुगैः ॥ ३० ॥

कणभक्षाक्षपादानां माध्वानाञ्च मते तथा ।
माहेश्वराणां सर्वेषामेवमेव निदर्शनम् ॥ ३१ ॥

कर्मानुसारं जीवानां फलं दत्ते महेश्वरः ।
अतः फलप्रदाने हि वैषम्यं नेश्वरस्य तत् ॥ ३२ ॥

कर्मणां फलदानेऽपि न कर्मापेक्षितां क्वचित् ।
स्वीकुर्वन्ति महाप्राज्ञाः केचिन्माहेश्वराः पुनः ॥ ३३ ॥

ईशस्य कर्मापेक्षित्वे स्वातन्त्र्यं तस्य भज्यते ।
अतस्तत्तत्फलोत्पत्तौ निमित्तं कर्म तन्नये ॥ ३४ ॥

पातञ्जलमते त्वीशः जीवाद् भिन्नोऽस्ति निर्गुणः ।
निर्लेपो निर्विशेषश्च जगतो नापिकारणम् ॥ ३५ ॥

श्रीमच्छङ्करपादानां मतेऽपीशोऽस्ति निर्गुणः ।
निर्लेपो निर्विशेषश्चाऽनन्योऽस्ति पारमार्थिकः ॥ ३६ ॥

नोपादानं स जगतः निमित्तं नाऽपि कथ्यते ।
यतो हि जगतो नास्ति सत्तैव पारमार्थिकी ॥ ३७ ॥

सत्ता तु जगतो नूनं केवलं व्यावहारिकी ।
कारणं तस्य तु प्रोक्तः मायोपाधिक ईश्वरः ॥ ३८ ॥

स्वप्राधान्येन जगतो निमित्तं कारणं हि सः ।
माया-प्राधान्यतो ज्ञेयमुपादानञ्च कारणम् ॥ ३९ ॥

मायायुक्तस्यैकदेश-भूतो मायाश्रयश्च यः ।
तं च विवर्तोपादानं संगिरन्ते विपश्चितः ॥ ४० ॥

जीवसम्पादितानां हि कर्मणामयमीश्वरः ।
यथायोग्यं फलं दत्ते तत्तत्कर्मानुसारतः ॥ ४१ ॥

इत्येवमीश-विषये मतभेदः प्रदर्शितः ।
जिज्ञासूनाञ्च सर्वेषामुपकारस्य हेतवे ॥ ४२ ॥

## ईश्वर-ज्ञाने प्रमाणम्

अथायमीश्वरः केन प्रमाणे नाऽवगम्यते ।
इत्यत्र मतभेदोऽपि यथाशास्त्रं प्रदर्श्यते ॥ ४३ ॥

ईश्वरं ये न मन्यन्ते विचारस्तन्नये मुधा ।
यतो बन्ध्यासुतादीनां विवादो नास्ति नामनि ॥ ४४ ॥

मन्यन्त ईश्वरं ये च न्यायपातञ्जलादयः ।
तेषामपीश्वरज्ञाने वैमत्यं दृश्यते मिथः ॥ ४५ ॥

तदेव विशदी कर्तुमग्रे किञ्चित्प्रदर्श्यते ।
ध्यानेन विदुषा सर्वं प्रेक्षणीयं प्रयत्नतः ॥ ४६ ॥

जीवानामीश्वर-ज्ञानं जायमानं यदिष्यते ।
तदवस्था-विभेदेन द्विविधं परिलक्ष्यते ॥ ४७ ॥
एकन्तु मोक्षावस्थायां द्वितीयञ्च ततोऽपि प्राक् ।
अद्वैतवादिनामाद्यं मते नो संभविष्यति ॥ ४८ ॥
द्वैतवादिष्वपि न्याय-वैशेषिकमतानुगाः ।
ये सन्ति तन्नये मोक्षे ज्ञानं नैव प्रजायते ॥ ४९ ॥
यतो हि जीव-ज्ञानानां मुक्तावुच्छेदसम्भवात् ।
पाषाणकल्पजीवानामीशज्ञानं कथं भवेत् ॥ ५० ॥
असङ्गत्वाच्च जीवानां सांख्य-पातञ्जले नये ।
मोक्षे स्वरूपेऽवस्थानात् किञ्चिज्ज्ञानं न जायते ॥ ५१ ॥
यदा स्वरूपेऽवस्थानं जीवानां जायते तदा ।
ज्ञातृज्ञेयादि भावानामभावान्नेशधीः क्वचित् ॥ ५२ ॥
जीवस्य प्रत्यभिज्ञायां मुक्तावीश्वररूपता ।
स्वयमेव ततोऽन्यस्य चेश्वरस्य हि धीः कथम् ॥ ५३ ॥
तेनैषां मुक्त्यवस्थायां नेश्वर-ज्ञानसम्भवः ।
अन्येषां तार्किकाणाञ्च मतमग्रे प्रदर्श्यते ॥ ५४ ॥
अन्येषां तार्किकाणां हि द्वैतवेदान्तिनां नये ।
मुक्तावीश्वर-प्रत्यक्षं जायते नाऽत्र संशयः ॥ ५५ ॥
मोक्षस्य साधनीभूतं मोक्षात्प्राग् यच्च जायते ।
तत्त्वान्वेषणरूपं तच्चात्मज्ञानं निगद्यते ॥ ५६ ॥
तत्त्वान्वेषणरूपस्य चात्मज्ञानस्य निश्चये ।
अनुमानन्तु प्रथमं श्रुतिः पश्चात्प्रवर्तते ॥ ५७ ॥

श्रुतेरपेक्षया नूनं तार्किकाणं मते पुनः ।
अनुमानं हि बलवदतः पूर्वं प्रवर्तते ॥ ५८ ॥
तत्त्वस्य निश्चयः पूर्वो अनुमानेन जायते ।
ततोऽनुमोदते पश्चात्तार्किकाणां मते श्रुतिः ॥ ५९ ॥
श्रीमद्रामानुजार्याणां मते नैतद्धि युज्यते ।
श्रुतिर्बलवती यस्मादनुमानाच्च तन्नये ॥ ६० ॥
अतस्तेषां मते पूर्वं श्रुतिरेव प्रवर्तते ।
ततस्तदनुसारेणाऽनुमानमनुगच्छति ॥ ६१ ॥
अनुमानस्य प्रामाण्यं माध्वानां नेष्यते मते ।
अत ईश्वरविज्ञाने श्रुतिरेव गरीयसी ॥ ६२ ॥
श्रीमच्छङ्कर पादानां मतेऽप्यद्वैत-निश्चये ।
श्रुतिः प्रक्रमते पूर्वमनुमानं ततः परम् ॥ ६३ ॥
श्रुतेरपेक्षयाऽन्येषां तार्किकाणां मते पुनः ।
अनुमानस्य त्वरितमनुभावकतेष्यते ॥ ६४ ॥
सर्पज्ञानवतां रज्जौ सर्पाभावस्य निश्चयः ।
नायं सर्प इति शब्दात् तथा शीघ्रं नजायते ॥६५ ॥
यथा नायं प्रचलति सर्पोऽतो नैव विद्यते ।
अनुमित्याऽनया शीघ्रं सर्पाभावोऽनुभूयते ॥ ६६ ॥
शीघ्रं प्रत्यायकत्वेनाऽनुमानस्यैव तन्नये ।
श्रुतेरपेक्षया पूर्वं प्रवृत्तिरभिधीयते ॥ ६७ ॥
परन्तु द्वैतिनामेव मत एवं हि युज्यते ।
अद्वैतवादिनामेषा शङ्का वास्ति न कर्हिचित् ॥ ६८ ॥

ज्ञातुः सकाशाज्ज्ञेयं वै भिन्नं यत्र प्रतीयते।
तत्रैवाऽनुमितेः पूर्वं प्रवृत्तिः कर्तुमिष्यते ॥ ६९ ॥
यत्र ज्ञेयेन साकन्तु स्वस्यैक्य मनुभूयते।
युक्ते रपेक्षया तत्र शब्द एवाऽनुभावकः ॥ ७० ॥

दशमस्त्वमसीत्यादौ शब्दा देवापरोक्षधीः।
तथा तत्त्वमसीत्यादौ शब्द एवाऽनुभावकः ॥ ७१ ॥
किञ्चात्मैक्यं निर्विशेषं नानुमानस्य गोचरः।
विषेषविषयत्वं हि प्रमाणानां यतो मतम् ॥ ७२ ॥

इदमीदृशमित्येवं-रूपेणैवाऽव बोधकम्।
प्रमाणं हि प्रभवति सविशेषस्य वस्तुनः ॥ ७३ ॥
आत्मातु निर्विशेषोऽस्ति मानगम्यो न विद्यते।
'मनसा यन्न मनुते' इत्यादि श्रुतिबाधनात् ॥ ७४ ॥

ब्रह्मणो निर्विशेषस्य यद्यपि प्रतिपादने।
श्रुते रपि न सामर्थ्यं विद्यते हि कथञ्चन ॥ ७५ ॥
'यतो वाचो निवर्तन्ते' इत्यादि श्रुतिभिरपि।
स्वयं स्वस्या असामर्थ्यं स्पष्ट मेवाऽनुमन्यते ॥ ७६ ॥

तथाप्येता हि श्रुतयो नेति नेत्यादिका अपि।
प्रतिषेधमुखेनैव कथञ्चिद् ब्रह्म-बोधिकाः ॥ ७७ ॥
अथवा लक्षणावृत्त्या श्रुति ब्रह्माव बोधयेत्।
तात्पर्याऽनुपपत्त्या च लक्षणा क्रमतेऽत्र वै ॥ ७८ ॥

निर्विशेषे सविशेषे ब्रह्माखि यत्र कुत्रचित्।
उपक्रमादि-लिङ्गेभ्यः श्रुते स्तात्पर्य-निर्णयः ॥ ७९ ॥

तदेव लक्षणावृत्त्या प्राचार्यैः सम्प्रदर्श्यते ।
अनुमानन्तु लिङ्गस्य सम्बन्धाल्लिङ्गि बोधकम् ॥ ८० ॥

केनापि सह सम्बन्धो निर्विशेषस्य ब्रह्मणः ।
नैवास्ति येनानुमितेः प्रश्रयः सम्भवे दिह ॥ ८१ ॥

तस्मात्कथञ्चिच्छ्रुत्यैव निर्विशेषस्य ब्रह्मणः ।
ज्ञानं संभवि नान्येन प्रमाणेनेति निश्चितम् ॥ ८२ ॥

यच्चोक्तं हि श्रुतेः पश्चात् पार्षदत्वेन हेतुना ।
जगत्कारणविषयेऽनुमानस्य गतिर्भवेत् ॥ ८३ ॥

तदुपाधिविशिष्टस्य ब्रह्मणो विषये मतम् ।
निर्विशेषन्तु यद् ब्रह्म तत्र तस्य गतिर्न हि ॥ ८४ ॥

जगतः कारणीभूते सोपाधिक महेश्वरे ।
नानुमानं श्रुतेः पूर्वं क्रमत इति चिन्त्यते ॥ ८५ ॥

जगतः कारणं किञ्चि दस्तीत्येवं विनिश्चिते ।
बोधयत्यनुमानं हि कार्य-द्वारा च कारणम् ॥ ८६ ॥

क्षित्यङ्कुरादिकं जन्यं दृष्ट्वा तत्रास्ति संशयः ।
किं स्वाभाविक मेवेद मथवा केनचित्कृतम् ? ॥ ८७ ॥

'यतो वेमानिभूतानि' इत्यादि श्रुतिमन्तरा ।
संशयस्यास्य केनाऽपि न निराकृति रिष्यते ॥ ८८ ॥

यतोहि श्रुत्या केनापि क्रियमाणत्व-निश्चये ।
कार्य कारणमूलस्याऽनुमानस्य गतिर्भवेत् ॥ ८९ ॥

श्रुतेरप्येवमेवास्ति घोषणा सर्वसम्मता ।
नावेदविद्धि मनुते तं बृहत्तं कदाचन ॥ ९० ॥

अतो हि श्रुत्या प्रथमं श्रोतव्योयमुदाहृतः ।
तत्पश्चादनुमानेन त्वात्मा मन्तव्य उच्यते ॥ ८१ ॥
श्रुत्या प्रदर्शिते मार्गेऽनुमानस्यास्ति प्रश्रयः ।
अतर्क्येशस्य विषये श्रुतिसिद्धान्तविन्मतम् ॥ ८२ ॥
एवमीश्वरविषये सर्वशास्त्रकृतां मतम् ।
प्रदर्शितं यथाशास्त्रं दर्शनेशं विपश्चिता ॥ ८३ ॥

इति तृतीयोऽध्यायः

## जीवः

जीवस्वरूपं तन्नित्याऽनित्यत्वस्य च चिन्तनम् ।
चार्वाकादि-मतेनाऽत्र संक्षेपेण प्रदर्श्यते ॥ १ ॥
शरीरमेव जीवोऽस्ति चैतन्येन समाश्रितम् ।
स एव कर्ता भोक्ता च चार्वाकाणामिदं मतम् ॥ २ ॥
चतुर्णां खलु भूतानां परमाणु-समुच्चयः ।
जीवस्वरूपं विज्ञेयं चार्वाकस्य मते पुनः ॥ ३ ॥
यथा किण्वादि-द्रव्येभ्यो मदशक्तिः प्रजायते ।
तथा भूत-चतुष्केभ्य श्चैतन्यमुपजायते ॥ ४ ॥
देहाकारेण भूतानां परिणामो यदा भवेत् ।
तदैव तत्र चैतन्यं जायते नाऽत्र संशयः ॥ ५ ॥
तादृक्चैतन्ययुग् देहो जीवाख्यां लभते ध्रुवम् ।
चैतन्यांशो बोधरूपो देहांशश्च जडोऽभवत् ॥ ६ ॥

जडबोधस्वरूपोऽयं जीवो नानाविधोऽभवत् ।
नानाविधत्वे जीवानां देहभेदोऽस्ति कारणम् ॥ ७ ॥
देहो त्पत्तिविनाशाभ्या मनित्यश्चाऽपि सम्मतः ।
चार्वाकाणां मते जीवः इति तच्छास्त्रविन्मतम् ॥ ८ ॥

इन्द्रियाण्येव केषाञ्चि न्मते जीवः प्रकीर्तितः ।
प्राण एव तथान्येषा मन्येषां मन एव च ॥ ९ ॥
एते सर्वे तु चार्वाकविशेषा एव नापरे ।
प्रत्यक्षा दपरं नान्यत्प्रमाणं मन्वते च ते ॥ १० ॥

अथ बौद्धमतेनाऽपि तत्स्वरूपं निगद्यते ।
प्रत्यक्ष मनुमानञ्च प्रमाणं तन्मते द्विकम् ॥ ११ ॥
व्यवहारदशायां यः जीवात्मा भासतेतराम् ।
तस्य मूलस्वरूपन्तु शून्यं माध्यमिका जगुः ॥ १२ ॥

अन्येषा मपि बौद्धानां मत आत्मा तथाविधः ।
विज्ञानरूपो जीवात्मा सचाऽनित्यः प्रकीर्तितः ॥ १३ ॥
यतः क्षणिकविज्ञान-प्रवाहो जीवसंज्ञकः ।
अतो हि क्षणिकत्वेनाऽ नित्याः जीवा उदाहृताः ॥ १४ ॥

पूर्वविज्ञान संस्कार-संक्रमा दुत्तरोत्तरे ।
विज्ञाने स्मरणादीनामुपपत्तिश्चतन्नये ॥ १५ ॥

शरीर परिमाणो हि जैनानां जीव इष्यते ।
देहाद्भिन्नोऽपि देहस्य परिणामेन सम्मितः ॥ १६ ॥

यथा यथा च देहोऽयं वर्धते वाऽपचीयते ।
तथा तथा च जीवात्मा वर्धते चाऽपचीयते ॥ १७ ॥

एवं वृद्धयाऽपचित्याच नात्मा कूटस्थ इष्यते ।
परिणामि-नित्यभावः जैनाना मात्मनः स्मृतः ॥ १८ ॥
सर्वत्र सर्वकाले य एक रूपेण तिष्ठति ।
कूटस्थनित्यो विज्ञेयः यथास्तिकमते हि सः ॥ १६ ॥
कूटस्थनित्यमात्मानं न्यायशास्त्रविशारदाः ।
वैशेषिकाश्च मन्यन्ते तत्र किञ्चिद्विचार्य्यते ॥ २० ॥
आत्मनस्तु गुणा ये वै बुद्धिदुःख सुखादयः ।
उत्पत्तिनाशशीलत्वा दनित्यास्ते मताः बुधैः ॥ २१ ॥
उत्पत्तिनाशसमये बुद्धयादीनान्तु धर्मिणि ।
आत्मन्यपि भवेन्नूनं विक्रिया नाऽत्र संशयः ॥ २२ ॥
उपयन्नपयन् धर्मो विकरोति हि धर्मिणम् ।
न्यायेनानेन जीवोऽय मनित्यः सम्भविष्यति ॥ २३ ॥
विना मूर्ते रुपचयं गुणस्योपचयो नहि ।
प्रोक्तं श्रीशङ्कुरार्येण शारीरस्य द्वितीयके ॥ २४ ॥
क्षित्यादिपञ्चभूतानां गुणस्यापचिते यतः ।
उत्तरोत्तरमेवास्ति सूक्ष्मत्वं क्रमशो यथा ॥ २५ ॥
पृथिव्यपेक्षया न्यूनो जले गन्धः प्रजायते ।
तस्माज्जलस्य सूक्ष्मत्वं तदपेक्ष्यास्ति निश्चितम् ॥ २६ ॥
तेजस्यपि रसो न्यूनः तदपेक्ष्यप्रजायते ।
तेजः सूक्ष्मं जलात्तस्मा द्रसाभावस्य कारणात् ॥ २७ ॥
पवनः तेजसः सूक्ष्मो रूपाभावस्य कारणात् ।
स्पर्शाभावेन वियतः सूक्ष्मत्वं प्रोच्यते बुधैः ॥ २८ ॥

एवं गुणानामुत्पत्तौ विनाश-समये तथा ।
क्षित्यादि धर्मिणां नूनं विक्रिया दृश्यते यथा ।। २९ ।।
तथैव सुखदुःखादि गुणानां ह्रास वृद्धितः ।
आत्मन्यपि भवेन्नूनं विक्रिया नाऽत्रसंशयः ।। ३० ।।
अतः कूटस्थ नित्यत्व मात्मनो नैव सिध्यति ।
नैयायिक नये तेन समाधिरभिधीयते ।। ३१ ।।
जीवात्मनो गुणा ये वै ज्ञानदुःखसुखादयः ।
नान्तर्भवन्ति जीवात्म स्वरूपे ते कदाचन ।। ३२ ।।
भूतले वर्तमानोऽपि न घटादि स्तदात्मकः ।
आत्माश्रितोऽपिबुद्ध्यादि स्तत्स्वरूप स्तथा नहि ।। ३३ ।।
यथा घटादि संयुक्ते भूतलत्वं न भूतले ।
केवले भूतले किन्तु भूतलत्वं समिष्यते ।। ३४ ।।
एवं बुद्ध्यादिसंयुक्ते नात्मन्यात्मत्व मिष्यते ।
आत्मत्वं केवले तद्वदात्मन्येवेष्यते बुधैः ।। ३५ ।।
यथा घटादि नाशेऽपि भूतले नैव विक्रिया ।
बुद्ध्यादीनां विनाशेऽपि तथानात्मनि विक्रिया ।। ३६ ।।
एवं कूटस्थनित्यत्व मात्मनो न विहन्यते ।
तथाप्येतन्मते तस्य जडत्वं प्रतिपद्यते ।। ३७ ।।
जीवात्मनो गुणा ये वै ज्ञान-दुःख-सुखादयः ।
नान्त र्भवन्त्यात्मरूपे देहवत्त कथञ्चन ।। ३८ ।।
एवं जीवात्मनो रूपं ज्ञानाद् भिन्नं यदीष्यते ।
सिद्धं तदात्मनो जाड्यं ज्ञानाद्भिन्नत्वहेतुना ।। ३९ ।।

पाषाणकल्पा आत्मानः मुक्तौ ज्ञानविनाशनात् ।
इति गौतमकाणाद-मतेनात्मा विवेचितः ॥ ४० ॥
मीमांसकविशेषा हि प्रभाकर-मतानुगाः ।
जडत्वमेव मन्यन्ते आत्मनो नात्र संशयः ॥ ४१ ॥
मीमांसकविशेषाणां भाट्टाना मंशभेदतः ।
जड बोधस्वरूपोऽय मात्मा चेष्टो विलक्षणः ॥४२ ॥
ज्ञानाद् भिन्नमभिन्नञ्च जैनन्याय-विशारदाः ।
आत्मानं किल मन्यन्ते देह मानेन मापितम् ॥ ४३ ॥
सांख्याः पातञ्जलाः शैवाः अद्वैत मत वर्तिनः ।
ज्ञान स्वरूप मात्मानं संगिरन्ते विपश्चितः ॥ ४४ ॥
तत्र सांख्यमतेनोक्तः पातञ्जल-मतेन च ।
निर्लेपो निर्गुणश्चात्माद्वैतवेदान्तिभिश्चसः ॥ ४५ ॥
द्वैतवेदान्तिनो माध्वाः विशिष्टाद्वैतवादिनः ।
रामानुजीया मन्यन्ते आत्मानं सगुणं ध्रुवम् ॥ ४६ ॥
कणभक्षाक्षपादानां मतेऽप्यात्मा तथाविधः ।
जीवस्य परिमाणेऽपि मतभेदः प्रदर्श्यते ॥ ४७ ॥
विज्ञानसन्ततिश्चात्मा बौद्धानां मत इष्यते ।
विज्ञानस्य गुणत्वेन परिमाणं न विद्यते ॥ ४८ ॥
आश्रयस्याऽनुमानेन नाऽपि तत्परिमाणता ।
वस्तुतः स्वाश्रयाभावात् वक्तुं शक्या हि तन्नये ॥ ४९ ॥
रामानुजीय-माध्वानां वाल्लभानां तथा मते ।
इष्टं जीवात्मनोऽणुत्व मिति तच्छास्त्रविन्मतम् ॥ ५० ॥

बौद्धेष्वन्तर्गता नूनं केचिन्माध्यमिकाः पुनः ।
चार्वाका अपि जैनाश्च मानं मध्यम मूचिरे ॥ ५१ ॥
जीवात्मनो विभुत्वं च न्यायशास्त्र विशारदाः ।
वैशेषिकाश्च मन्यन्तेऽद्वैतवेदान्तिनस्तथा ॥ ५२ ॥

सांख्याः पातञ्जलनाश्चापि विभुत्वमात्मन स्तथा ।
कथयन्ति यथाशास्त्रं श्रुतिमूलं न संशयः ॥ ५३ ॥
आत्मनः परिमाणेऽयं मतभेदः प्रदर्शितः ।
तथा कर्तृत्व-भोक्तृत्व-विषये किञ्चि दुच्यते ॥ ५४ ॥

आत्मनः किल कर्तृत्वं सत्यमेवास्ति नो मृषा ।
कणभक्षाक्षिपादानां मतमेत दुदीरितम् ॥ ५५ ॥
स्वाभाविकं न कर्तृत्वं किन्तु नैमित्तिकं हितत् ।
रामानुजीयै र्माध्वैश्च स्वीकृतं नात्र संशयः ॥ ५६ ॥

नैसर्गिकं न कर्तृत्वं भासते यत्तदात्मनि ।
किन्त्वौपाधिक मेवाहुः जीवब्रह्मैक्यवादिनः ॥ ५७ ॥
कर्तृत्वं प्रकृतेरेव न निर्लेपस्य चात्मनः ।
संसर्गात् प्रकृते रेव भासते तु तदात्मनि ॥ ५८ ॥

प्रातिभासिक मेवातः कर्तृत्वंतस्य सिध्यति ।
पातञ्जलानां सांख्यानां मतमेत न्निदर्शितम् ॥ ५९ ॥
कर्तृत्वं यादृशं येषां भोक्तृत्व मपि तादृशम् ।
निश्चेयं सुधियातेषां सांख्यपातञ्जलै र्विना ॥ ६० ॥

नैमित्तिकञ्च भोक्तृत्वं सांख्यशास्त्रविशारदाः ।
पातञ्जलाश्च मन्यन्ते कर्तृत्वं प्रातिभासिकम् ॥ ६१ ॥

सर्वेषां शास्त्रकाराणां जीवात्म-विषये मतम् ।
प्रदर्शितं यथाशास्त्रं ज्ञातव्यं तत्प्रयत्नतः ।। ६२ ।।

इति जीवात्मविचारोनाम चतुर्थोऽध्यायः ।

## जडवर्ग-मूलकारण-विवेकः

अथ जीवात्मनो भोक्तु र्भोग्यभूतो निरूप्यते ।
जडवर्गञ्च तस्याहु र्भोग्यभूतं विपश्चितः ।। १ ।।
पूर्वं दृश्यप्रपञ्चस्य किं मूलमिति प्रोच्यते ।
ध्यानेन विदुषा सर्वं द्रष्टव्यं द्रष्टु मिच्छता ।। २ ।।
ये दृश्यमाना जगति पदार्था भूतभौतिकाः ।
तेषा मस्तित्व विषये न विवादोऽस्ति कस्यचित् ।। ३ ।।
किन्त्वेषां दृश्यमानानां कारणं किञ्चि दस्ति वा ।
नास्तीत्येवं विचारो वै सर्वदर्शनभूमिका ।। ४ ।।
कारणेन विना किञ्चित् कार्यं भवति न क्वचित् ।
यच्च सावयवं वस्तु तत्कार्यमिति कथ्यते ।। ५ ।।
तस्मात्तेषां हि दृश्यनां किञ्चिदस्तीह कारणम् ।
किं तदिति विचारे च चार्वाका इदमूचिरे ।। ६ ।।
रजांसि यानि दृश्यन्ते जालसूर्यमरीचिषु ।
तान्येवास्याऽखिलस्यापि जगतो मूलकारणम् ।। ७ ।।
एतेभ्यः सन्ति सूक्ष्माणि न पराणि च कानिचित् ।
अत एतानि प्रोच्यन्ते सूक्ष्मत्वात् परमाणवः ।। ८ ।।

पृथिव्यप् तेजोवायूनां भेदेनैते चतुर्विधाः ।
अदृश्यत्वाच्च वियतः सत्तैवास्ति न तन्नये ॥ ९ ॥
बौद्धाश्च दृश्यमानाना मनुमानप्रमाणतः ।
सावयवत्वं रजसां साधयन्ति विपश्चितः ॥ १० ॥

तेषा मवयवा ये तु तएव परमाणवः ।
ततः कार्यप्रवाहस्य संततिः सन्ततं सृता ॥ ११ ॥
आकाशस्य पदार्थत्वं बौद्धै रपि न मन्यते ।
जैनै स्तु वियतः सत्वं मन्यते नाऽत्र संशयः ॥ १२ ॥

एतै रेक प्रकारा हि मन्यन्ते परमाणवः ।
त एवास्याऽखिलस्याऽपि जगतो मूलहेतवः ॥ १३ ॥
रजसोऽवयवा येच बौद्धैः दृश्यस्य कल्पिताः ।
न तेषां परमाणुत्वं न्यायवैशेषिके नये ॥ १४ ॥

किन्तु तेषामवयवाः इष्यन्ते परमाणवः ।
चतुर्विधानां भूतानां तएव मूलहेतवः ॥ १५ ॥

परमाणुद्वयस्याथ योगेन जायते च यत् ।
कार्यं तद् द्व्यणुकं प्राहुः न्यायवैशेषिकानुगाः ॥ १६ ॥

द्व्यणुकान्येव दृश्यस्य रजसोऽवयवा मताः ।
त्रयाणां द्व्यणुकानाञ्च संयोगात्त्र्यणुकं मतम् ॥ १७ ॥

जालसूर्यमरीचिस्थं सुक्ष्मं यद् दृश्यते रजः ।
तदेवत्र्यणुकं प्राहुः न्यायवैशेषिकानुगाः ॥ १८ ॥

क्षित्यादीनां चतुर्णां ये स्वीकृताः परमाणवः ।
तेषाञ्चाकाशवाच्यस्य नित्यत्वं मन्यते हि तैः ॥ १९ ॥

नान्यस्मादपि कस्माच्चि त्तेषा मुत्पत्तिसम्भवः ।
नाप्येषां विद्यते किञ्चिदपरं मूलकारणम् ॥ २० ॥

परमाणूना मनित्यत्वं मीमांसकमताऽनुगाः ।
पाणिनीयाश्च मन्यन्ते तत्र कारण मुच्यते ॥ २१ ॥

पृथिव्यप्तेजो वायूना माकाशस्य च विद्यते ।
क्रमेण पूर्वपूर्वस्य कारणञ्चोत्तरोत्तरम् ॥ २२ ॥

आकाशश्चाप्यनित्योऽस्ति शब्दस्तस्यास्ति कारणम् ।
तथाच सर्व-जगतः शब्दो वै मूलकारणम् ॥ २३ ॥

शब्द स्यापीह कार्यत्वं सांख्याः पातञ्जलाः पुनः ।
मन्वते कारणं तस्य शब्दस्याहङ्कृतिं तथा ॥ २४ ॥

अहङ्कारस्य तस्याऽपि महत्तत्त्वंहि कारणम् ।
तस्यापि कारणं बोध्यं प्रधानं त्रिगुणात्मकम् ॥ २५ ॥

प्रधानं नैव कस्यापि कार्यं भवति तन्नये ।
अतः प्रधानं जगतः मूलकारणमिष्यते ॥ २६ ॥

श्रीमद्रामानुजाचार्यै रेवमेवहि स्वीकृतम् ।
अद्वैतिनां मते किन्तु प्रधानं नास्ति कारणम् ॥ २७ ॥

श्रीमन्तः शङ्कराचार्या अद्वैतमतपोषकाः ।
प्रधानं नैव मन्यन्ते जगतो मूलकारणम् ॥ २८ ॥

'सदेव सौम्येद मग्र' इत्यादि श्रुतिवाक्यतः ।
सच्छब्द वाच्या चिच्छक्तिः जगतो मूलकारणम् ॥ २९ ॥

'आत्मा वा' इदमित्यादि-श्रुतिभिश्चापि बोधिता ।
आत्मशक्तिश्च सच्छब्दवाच्यास्ते नात्र संशयः ॥ ३० ॥

ब्रह्मायमात्मा चेत्यादि-श्रुतिभिश्चापि बोधिता।
आत्म शक्तिश्च ब्रह्मैव नप्रधानं कथञ्चन ॥ ३१ ॥
ईक्षतेश्च प्रधानस्य नास्ति सच्छब्दवाच्यता।
अतः प्रधानं नैवास्ति जगतो मूल कारणम् ॥ ३२ ॥
तस्माद् ब्रह्मैव सच्छब्द-वाच्यत्वेन व्यवस्थितम्।
समस्तस्याऽस्य जगतः मूलकारण मिष्यते ॥ ३३ ॥
एवं दर्शनभेदेन मूलकारणभिन्नता।
जिज्ञासूनां सुबोधाय यथाशास्त्रं प्रदर्शिता ॥ ३४ ॥

इति मूलकारणविचारे पञ्चमोऽध्यायः।

## इन्द्रियादिविचारः

भौतिकानीन्द्रियाण्याहुः नैयायिकमतानुगाः।
वैशेषिकाश्च तत्रेदं कारणं सम्प्रदर्श्यते ॥ १ ॥
पृथ्वी-गुणस्य गन्धस्य ग्राहकत्वे न हेतुना।
घ्राणेन्द्रियस्य संसिद्धं पार्थिवत्व मयत्नतः ॥ २ ॥
रसनेन्द्रियं रसस्यैव गुणस्यापाञ्च ग्राहकम्।
तेन तस्य जलीयत्वं सिद्धमेव न संशयः ॥ ३ ॥
तेजोगुणस्य रूपस्य ग्राहकत्वाच्च चक्षुषः।
तैजसत्वं हि संसिद्धं नाऽत्र सन्देह सम्भवः ॥ ४ ॥
वायोस्त्वगिन्द्रियञ्चापि गुणस्यैव हि ग्राहकम्।
स्पर्शस्य तेन तस्येष्टं वायवीयत्व मेव च ॥ ५ ॥

श्रोत्रेन्द्रियञ्च वियतः शब्दमेत्र गुणं तथा ।
गृह्णाति तेन तस्यापि गगनीयत्व मिष्यते ॥ ६ ॥

यस्य भूतविशेषस्य गुणं गृह्णाति यत्पुनः ।
इन्द्रियं तत् तदीयंवै प्रोच्यते न्यायकोविदैः ॥ ७ ॥
पृथिव्यप्तेजोवायूनां प्रत्येकं परमाणवः ।
सात्विकाः राजसाश्चापि तामसा अपि सम्मताः ॥ ८ ॥

तथाच भौतिकत्वेऽपि सात्विकत्वेन हेतुना ।
इन्द्रियाणां हि सर्वेषां सात्विकत्वं समिष्यते ॥ ६ ॥
आकाशन्तु स्वभावेन सात्विकं वर्ततेतराम् ।
तेन श्रोत्रेन्द्रियस्यापि सात्विकत्वं प्रसिध्यति ॥ १० ॥

सांख्याः पातञ्जलाः किन्तु भौतिकानीन्द्रियाणि नो ।
सात्विकाहङ्कृते स्तेषा मुत्पत्तिं मन्वते च ते ॥ ११ ॥
तामसाहङ्कृतेः पूर्व मुत्पन्नाः सन्ति ये पुनः ।
भूतकारणभूताश्च पञ्चतन्मात्रसंज्ञकाः ॥ १२ ॥

तत्साहाय्यं गृहीत्वैव सात्विकाहङ्कृतेः पुनः ।
श्रोत्रादीन्द्रियवर्गाणा मुत्पत्ति र्जायतेतराम् ॥ १३ ॥
विषयग्रहनियम स्तेनैषां न विरुध्यते ।
श्रीमद्रामानुजाचार्यैः एवमेव हि स्वीकृतम् ॥ १४ ॥

तदेकदेशिनः केचि दिन्द्रियोत्पत्ति सम्भवे ।
शब्दादि-पञ्चतन्मात्र-साहाय्यं नैव मन्वते ॥ १५ ॥
किन्त्विन्द्रियाणामुत्पत्तेः पश्चात्तेषां हि पोषकाः ।
प्रभवन्ति यथायोग्यं भूतवर्गाः यथाक्रमम् ॥ १६ ॥

तथा च पोषकी भूत भूताना मनुसारतः ।
विषय ग्रहनियमो नेन्द्रियाणां विरुध्यते ॥ १७ ॥
श्रीमतां शङ्कराचार्याणां नानयोः पक्षयोः क्वचित् ।
एकस्मिन् पक्षपातो हि दृश्यते श्रूयतेऽथवा ॥ १८ ॥
उत्तरा विज्ञाने त्यादि-सूत्र भाष्य विमर्शनात् ।
स्पष्टं प्रतीयते तेषामुभयोः स्वीकृतिर्यतः ॥ १९ ॥
श्रीविद्यारण्य मुनिना पञ्चदश्यां यदुच्यते ।
तेनापीन्द्रियवर्गस्य भौतिकत्वं प्रतीयते ॥ २० ॥
सत्वांशैः पञ्चभिस्तेषां क्रमादिन्द्रियपञ्चकम् ।
इत्यादि वदतातेन भौतिकत्वं समर्थितम् ॥ २१ ॥
परिमाण मिन्द्रियाणां बहुभिरणु दर्शितम् ।
किन्तु पातञ्जलैः सांख्यैः विभुत्वं मन्यतेतराम् ॥ २२ ॥
इन्द्रियस्य च कस्यापि नेन्द्रियेण च केनचित ।
ग्रहणं क्वापि भवति तेनाऽतीन्द्रिय मिन्द्रियम् ॥ २३ ॥
अनुमानादिनैवैषां ग्रहणं सर्वसम्मतम् ।
तस्मादिन्द्रियवर्गस्यातीन्द्रियत्वं समिष्यते ॥ २४ ॥
कर्मेन्द्रियाणि सर्वाणि ज्ञानेन्द्रियसमानि वै ।
भौतिकान्येव सिध्यन्ति तदुत्पत्तिः प्रदर्श्यते ॥ २५ ॥
तेषा मेकैकभूतेभ्यः प्रत्येकञ्चेन्द्रियद्वयम् ।
ज्ञानक्रिया-शक्ति भेदात् जायते नात्रसंशयः ॥ २६ ॥
ज्ञानशक्ति-प्रधानत्वाज्ज्ञानेन्दियसमुदभवः ।
क्रियाशक्ति प्रधानत्वात् कर्मेन्द्रिय-विनिर्गमः ॥ २७ ॥

ज्ञानशक्ति प्रधानत्वा दाकाशाच्छ्रोत्र-सम्भवः ।
क्रियाशक्ति प्रधानत्वा दभूद् वागिन्द्रियं ततः ॥ २८ ॥

वायो स्त्वगिन्द्रियं तस्मात् पाणिश्चापि प्रजायते ।
तेजसश्चक्षुरुद्भूतं पादश्चापि तथाऽभवत् ॥ २९ ॥
रसनाया स्तथा पायोः जलादुद्भूति रिष्यते ।
घ्राणेन्द्रिय मुपस्थश्च पृथिव्याः संबभूवतुः ॥ ३० ॥

आकाशस्य गुणः शब्दः श्रोत्रेणैवात्र गृह्यते ।
तस्मादाकाशरूपं तच्छ्रोत्रेन्द्रिय मुदाहृतम् ॥ ३१ ॥
वागिन्द्रियञ्च शब्दस्य ग्राहकत्वेन हेतुना ।
आकाशीयं महामान्यैः प्रोच्यते न्यायकोविदैः ॥ ३२ ॥

वायोर्गुणस्य स्पर्शस्य ग्राहकत्वेन हेतुना ।
त्वगिन्द्रियं वायवीयं पाणिश्चापि तथाविधः ॥ ३३ ॥
वायोः यथा क्रियाशक्तिः तथा पाणौ हि दृश्यते ।
तेन पाणीन्द्रियस्यापि वायवीयत्व मिष्यते ॥ ३४ ॥

तेजोगुणस्य रूपस्य ग्राहकत्वाच्च चक्षुषः ।
तैजसत्वं यथा सिद्धं तथा पादेन्द्रियस्य च ॥ ३५ ॥
पादयोश्च घृतादीनां मर्दनेनच चक्षुष ।
स्वास्थ्य-संदर्शनात् तेजो-रूपं पादेन्द्रियं मतम् ॥ ३६ ॥

अपां रसगुणस्यापि ग्राहकत्वेन हेतुना ।
प्रसिद्धं सर्वशास्त्रेषु जलीयं रसनेन्द्रियम् ॥ ३७ ॥
पाय्विन्द्रियं तथा प्रोक्तं जलवन्मलशोधकम् ।
तेन तस्याऽपि बोद्धव्यं जलीयत्वं विपश्चिता ॥ ३८ ॥

पृथ्वीगुणस्य गन्धस्य ग्राहकत्वेन हेतुना।
घ्राणेन्द्रियं यथा सिद्धं पार्थिवं सर्वसम्मतौ ॥ ३८ ॥
दुर्गन्ध व्यञ्जकत्वेन तथो पस्थेन्द्रियस्य च।
पार्थिवत्व मयत्नेन सिध्यत्येव न संशयः ॥ ४० ॥
इति इन्द्रियविचारो नाम षष्ठोऽध्यायः

## अन्तः करण-विचारः

मनः—

मनो न भौतिकं किन्तु स्वतन्त्रं द्रव्यमिष्यते।
नैयायिकानां सर्वेषां काणादानाञ्च सम्मतौ ॥ १ ॥
इन्द्रियाणाञ्च सर्वेषां प्रेरकं मन उच्यते।
तच्च कर्मेंद्रियाणांहि प्राणद्वाराऽस्ति प्रेरकम् ॥ २ ॥
ज्ञानेन्द्रियाणां प्राणस्य साहाय्येनैव प्रेरकम्।
युगपज्ज्ञानाऽनुत्पत्ति र्मनसो लिङ्गमुच्यते ॥ ३ ॥
सांख्य-पातञ्जलानाञ्च भौतिकं न मनः स्मृतम्।
सात्विकाहङ्कृते स्तस्य चोत्पत्तिर्मन्यते हि तैः ॥ ४ ॥
राजसाहङ्कृते युक्त-सात्विकाहङ्कृतेः पुनः।
मन उत्पद्यते तच्च व्यापकं तन्मते मतम् ॥ ५ ॥
सर्वेषां पञ्चभूतानां महतां सात्विकांशतः।
उत्पत्तिं मनसः प्राहु रद्वैतमतवादिनः ॥ ६ ॥
तत्रापि वायवीयोंऽश श्चाधिको वर्ततेतराम्।
तेनैव हेतुना तस्य शीघ्रगामित्व मिष्यते ॥ ७ ॥

अणुमात्रं हि मनसः परिमाणं प्रदर्शितम् ।
अयौगपद्याज्ज्ञानानां न्यायवैशेषिके नये ॥ ८ ॥

विभुत्वं मनसः प्रोक्तं साङ्ख्यतत्त्वविवेचने ।
योगसूत्रस्य वृत्तौ च नागेशेनापि दर्शितम् ॥ ९ ॥

तथा च सांख्याचार्यस्य योगाचार्यस्य सम्मतौ ।
विभुत्वं मनसः प्रोक्तं मीमांसक-मतेऽपि च ॥ १० ॥

हृदयं मनसः स्थानं विद्यारण्येन स्वामिना ।
पञ्चदश्यां द्वितीयस्य द्वादशे परदर्शितम् ॥ ११ ॥

तत्रापि मनसोऽणुत्व-वादिनां विदुषां नये ।
अनेकेन्द्रियसम्बन्धो युगपन्नैव युज्यते ॥ १२ ॥

तथा चैकक्षणे ज्ञानं त्रयं वा द्वयमेव वा ।
भवतु विद्यते नैव शास्त्रकारस्य सम्मतौ ॥ १३ ॥

बहूनि यानि ज्ञानानि भवन्त्यष्टावधानिनाम् ।
युगपत् तानि सर्वाणि भ्रममूलानि सर्वथा ॥ १४ ॥

यावन्ति भान्ति ज्ञानानि पूर्वोक्ताष्टावधानिनाम् ।
तावन्तः सूक्ष्मकालांशाः तादृग् ज्ञानाश्रयाः मताः ॥ १५ ॥

क्षणस्याऽत्यन्त सूक्ष्मत्वा त्तदाकलनसम्भवः ।
अस्मादृशाल्पबुद्धीनां विद्यते नैव कर्हिचित् ॥ १६ ॥

तेनाऽत्र यौगपद्यस्य भ्रान्ति नैव निवर्तते ।
रसगन्धाद्यनेका न दीर्घशष्कुलीभक्षणे ॥ १७ ॥

भवति यानि ज्ञानानि क्षणभेदेन तान्यपि ।
भिन्नान्येव न युगपज्जायन्ते किल तन्नये ॥ १८ ॥

विभुत्वं येच मनसो मन्यन्ते सांख्ययोगिनः ।
तेषां मते तु युगपज्ज्ञानोत्पत्तिर्हि सम्भवेत् ॥ १९ ॥
चतस्रो वृत्तयस्तस्य मनसः सन्ति शोभनाः ।
आद्या संशयशीला च द्वितीया निश्चयात्मिका ॥ २० ॥
गर्वात्मिका तृतीयाऽस्ति चतुर्थी स्मरणात्मिका ।
[ संशयात्मिकया वृत्त्या विशिष्टं मन उच्यते ॥ २१ ॥
निश्चयात्मिकया वृत्त्या बुद्धि रित्यभिधीयते ।
गर्वात्मिका च या वृत्ति स्तयाहङ्कार उच्यते ॥ २२ ॥
स्मारणात्मिकया वृत्त्या चित्तमित्यभिधीयते । ]
एवमेकं मनो वृत्ति-भेदेनेष्टं चतुर्विधम् ॥ २३ ॥
मनो बुद्धि रहङ्कार श्चित्तञ्च चेतनेति च ।
मनः पञ्चविध प्राहुः पूर्णप्रज्ञा विचक्षणाः ॥ २४ ॥
मनो बुद्धि रहङ्कारश्चेत्यन्तः करणं त्रिधा।
तेषाञ्चवृत्तयस्तस्रः नकुलीशस्य दर्शने ॥ २५ ॥
संकल्पो मनसो वृत्ति र्बुद्धेश्चाध्यवसायिका ।
अहङ्कार स्याऽभिमान इत्येता वृत्तयः स्मृताः ॥ २६ ॥
चित्तन्तु मनसोऽवस्था-विशेषो नास्ति तन्नये ।
किन्तु बोध स्वरूपोऽयं जीवस्य गुण इष्यते ॥ २७ ॥
इति अन्तः करणनिरूपणं नाम सप्तमोऽध्याय ॥

## ज्ञानम्

मनसो विषये पूर्वं सर्वशास्त्रस्य सम्मतिः ।
प्रदर्शिताऽथ ज्ञानस्य विषयेऽपि प्रदर्श्यते ॥ १ ॥

दृक्-क्रियाशक्ति-भेदेन चैतन्यं द्विविधं मतम् ।
माहेश्वराणां सर्वेषां मते नास्त्यत्र संशयः ॥ २ ॥

विषयेन्द्रिय-सम्बन्धोपकृतं हि मनो मतम् ।
प्रत्यक्षज्ञानजनकं सर्वशास्त्रस्य सम्मतौ ॥ ३ ॥

परोक्षज्ञानजनने मनसो नैव विद्यते ।
विषयेन्द्रिय सम्बन्धाऽपेक्षा इत्यपि सम्मतौ ॥ ४ ॥

अतः परोक्ष ज्ञाने हि स्वतन्त्रं विद्यते मनः ।
विषयेन्द्रियसम्बन्धाधीनं प्रत्यक्षसंज्ञके ॥ ५ ॥

इन्द्रियस्पृष्ट मनसा संयुक्ते एव चात्मनि ।
कश्चिद् गुणविशेषंहि सम्बन्धो जनयत्यसौ ६ ॥

अयं गुणविशेषोहि ज्ञानमित्युच्यते बुधैः ।
न्याय वैशेषिका चार्यैः स्वतत्वान्वेषण तत्परैः ॥ ७ ॥

निराकार मनित्यञ्च ज्ञान मेतन्मते मतम् ।
ईश्वरस्य च यज्ज्ञानं तन्नित्यं परिकीर्तितम् ॥ ८ ॥

श्रीमद्रामानुजार्योऽपि ज्ञान मात्मगुणं तथा ।
मनुते किन्तु तन्नित्यं जीवस्यापि ब्रवीत्यसौ ॥ ९ ॥

विषयेन्द्रियसम्बन्धात् सएव चात्मनो गुणः ।
घट ज्ञानं पट ज्ञान मादिरूपेण भासते ॥ १० ॥

चित्त नामा च जीवस्य विशेषो गुण इष्यते ।
नकुलीशमते सोऽस्ति बोधरूपो न संशयः ॥ ११ ॥

विषयेन्द्रिय सम्बन्धे घटाद्यर्थान् सएवहि ।
बोधस्वरूपहेतुत्वात् प्रकाशयति दीपवत् ॥ १२ ॥

घटादीनां पदार्थानां स्वरूपद्वय मुच्यते ।
बाह्याभ्यन्तर भेदेन बौद्ध वैभाषिके नये ॥ १३ ॥
घटादि-विषयाणाञ्च बाह्यरूपस्य दृश्यते ।
जलानयन कार्यादा वुपयोगस्तु सर्वदा । १४ ॥
विषयेन्द्रिय सम्बन्धे तादृशेन्द्रिय-मार्गतः ।
इन्द्रियस्तु मनसि प्रतिबिम्बान्तरं च तत् । १५ ॥
तदेव ज्ञान मित्याहुः वैभाषिकमतानुगाः ।
किम गतं मनसि ? प्रश्नस्तेनाऽत्र युज्यते । १६ ॥
बाह्या अर्था न विद्यन्ते मते विज्ञानवादिनाम ।
विज्ञान-स्कन्ध एवास्य पूर्व संस्कार योगतः ॥ १७ ॥
घटादिरूपमाश्रित्य बाह्यवच्च प्रतीयते ।
अनित्यञ्चापि साकारं ज्ञान मेतन्मते मतम् ॥ १८ ॥
परिणाम विशेषोहि मनसो ज्ञान मुच्यते ।
साङ्ख्ये पातञ्जलानाञ्च मतमग्रे निरूप्यते ॥ १९ ॥
बिभो हिं मनसो योऽस्ति प्रदेशो हृदयस्य वै ।
विषयेन्द्रिय संबन्धे तेनैव परिणम्यते ॥ २० ॥
परिणामश्चाय मेव मनो वृत्ति निगद्यते ।
साचैवात्र मनो वृत्ति रात्मनि प्रति बिम्बते ॥ २१ ॥
प्रतिबिम्बञ्च हृदया वच्छिन्ने देश इष्यते ।
तद्वृत्ति प्रतिबिम्बेनाऽवच्छिन्नं यच्च वर्तते ॥ २२ ॥
आत्मचैतन्यमेवैत ज्ज्ञान मित्युच्यते हितैः ।
सांख्यानामपि सिद्धान्तः संक्षेपेणात्र कथ्यते ॥ २३ ॥

विषयावच्छिन्नदेशो मनसो यो हि वर्तते ।
तस्यैव परिणामोऽत्र मन्यते सांख्यकोविदैः ।। २४ ।।

आत्मप्रदेशे विषयावच्छिन्ने प्रतिबिम्बनम् ।
अयमेव विशेषोऽस्ति सांख्यात् पातञ्जलेपुनः ।।२५।।

मनसोऽणुत्वमिच्छन्ति केचित्सांख्यैकदेशिनः ।
तन्मतेत्विन्द्रिय द्वारा मनसा गतिरुच्यते ।। २६ ।।

तथा च विषयक्षेत्रे गत्वा चेन्द्रिय मार्गतः ।
मनो हि परिणमतेऽद्वैतवेदान्तिनामपि ।। २७ ।।

विषयाकारमनसः परिणामोहि यो भवेत् ।
सा वृत्ति स्तदवच्छिन्नं चैतन्यं ज्ञानमुच्यते ।। २८ ।।

मूर्ताऽमूर्तप्रपञ्चेषु व्यापकस्यात्मनो यथा ।
हृदये मनसि व्याप्ते मनो वृतावपि स्वयम् ।। २९ ।।

आत्मस्वरूप मेवास्ति चैतन्यं व्यापकं तथा ।
एतन्मतेऽपिसाकार मनित्यं ज्ञानमिष्यते ।। ३० ।।

यद्यप्यात्मस्वरूपस्य नित्यत्वं वर्ततेतराम् ।
तथाऽपि वृत्त्यवच्छिन्न मनित्यं तत्प्रकीर्तितम् . ३१ ।।

परोक्षज्ञान काले तु मनसो विषय स्थले ।
विषयेन्द्रियसम्बन्धा भावान्नो गतिरिष्यते ।। ३२ ।।

अनुमानेन शब्दैर्वा जायमानन्तु यत्पुनः ।
तदेवज्ञानं सर्वेषां परोक्षं सम्यगिष्यते ।। ३३ ।।

प्रयोजनञ्च मनसः शब्दाद्यर्थस्य ज्ञापनम् ।
सिध्यत्येव हि सर्वेषां मते नात्रास्ति संशयः ।। ३४ ।।

एवं ज्ञानस्य विषये सर्वशास्त्रस्य सम्मतिः ।
प्रदर्शिता मया सम्यक् प्रेक्षणीया विपश्चिता ॥ ३५ ॥

इति ज्ञाननिरूपणं नाम अष्टमोऽध्यायः ।

## पदार्थेषु तमोविचारः

पदार्थेष्वन्धकारादिऽविषयेषु प्रदर्श्यते ।
मतभेदो यथाशास्त्रं सर्वशास्त्रकृतां मया ॥ १ ॥
तमस्त्वभावरूपं हि भावरूपं न विद्यते ।
इति वैशेषिकाः प्राहुः गौतमानुगता स्तथा ॥ २ ॥

तेजोऽभावस्वरूपत्वं तमसो लक्षणं मतम् ।
दीपिकायां तथा न्याय-बोधिन्यादिषु दर्शितम् ॥ ३ ॥
तमो न तेजोऽभावोऽस्ति मीमांसकैकदेशिनाम् ।
तेजो ज्ञानस्यविरहः किन्तु तेषां मते तमः ॥ ४ ॥

तमो द्रव्यं परन्त्वत्र नीलरूपमारोपितम् ।
इत्याहुः श्रीधराचार्या स्तमस्तत्त्वविमर्शने ॥ ५ ॥
मीमांसकविशेषाणां भाट्टाना ञ्चमते पुनः ।
नीलरूपाश्रयो द्रव्यं तमः प्रोक्तन्तु वार्तिके ॥ ६ ॥

छायाया स्तमसश्चापि सम्बन्ध द् गुणकर्मणोः ।
द्रव्यत्वं केचिदिच्छन्ति मीमांसक-मताश्रयाः ॥ (श्लो० वा०) ७॥
वेदान्तिनोऽपि तमसः द्रव्यत्वं मन्वतेतराम् ।
अन्तर्भावं पृथिव्यान्तु श्रीमद्रामानुजाश्रयाः ॥ ८ ॥

शङ्कराचार्य पादानां माध्वानाञ्च मतं पुनः ।
तमः स्वतन्त्रं द्रव्यन्तु प्रोच्यते नाऽत्र संशयः ॥ ९ ॥
तमसो विषये सर्वा-चार्याणां दर्शितं मतम् ।
अथदिग् विषयेतेषां मतभेदः प्रदश्यते ॥ १० ॥

## दिक्-कालौ

दिशः स्वतन्त्रद्रव्यत्वं मन्यते न्यायकोविदैः ।
गौतमैः कणभदौश्च तच्छान्त्रेव प्रतत्परैः ॥ ११ ॥
दिशोऽन्तर्भावमाकाशे रामानुजमहोदयाः ।
मन्यन्ते पाणिनियाश्चाऽद्वैतवेदान्तिनस्तथा ॥ १२ ॥
अव्याकृताकाश-रूपां दिशं माध्वाहि मन्वते ।
कालः स्वतन्त्रं द्रव्यन्तु विद्यते तन्मतेऽपि च ॥ १३ ॥
श्रीमद्रामानुजाचार्या स्तथा माहेश्वरा अपि ।
कणभक्षाचपादाश्च कालं द्रव्यं हि मन्वते ॥ १४ ॥
सांख्याः पातञ्जलाः बौद्धा श्चार्वाकाश्च विशेषतः ।
मन्यन्ते नैव कालं हि पृथग द्रव्यं कदाचन ॥ १५ ॥
कालः स्वतन्त्रं द्रव्यं नो वर्तते किन्तु तस्य हि ।
अन्तर्भावमविद्यायां मन्यन्तेऽद्वैतवादिनः ॥१६॥
कणभक्षादिभिरपि: समवायोऽपि स्वीकृतः ।
परन्त्वन्यस्य कस्यापि नाचार्यस्यास्ति सम्मतः ॥ १७ ॥
वैशेषिकैः समुक्तानां केषाञ्चिद गुणकर्मणाम् ।
इतरत्रान्तर्भावस्तु श्रीमद्रामानुजैः कृतः ॥ १८ ॥

संख्येयद्रव्यरूपैव संख्या तन्मत इष्यते ।
संयोगाभावरूपं च पृथक्त्वं तन्मते मतम् ॥ १९ ॥
अतः पृथक्त्वं नैवास्ति भिन्नं द्रव्यं कथञ्चन ।
संयोगनाशरूपोऽयं विभागोप्यपरो नहि ॥ २० ॥

परत्वञ्चापि संयोग-विशेषः देशकालयोः ।
अपरत्वं तथैवोक्तं श्रीरामानुजदर्शने ॥ २१ ॥
शक्ते विशेषरूपं हि गुरुत्वं समुदाहृतम् ।
द्रवद्रव्यस्वरूपञ्च द्रवत्वं तन्मते मतम ॥ २२ ॥

स्नेहोप्याश्रयस्वरूप-विशेषोऽस्त्येवतन्नये ।
इत्थमेषां गुणानाञ्च बोध्योऽन्तर्भाव एव च ॥ २३ ॥
सुखं दुःखं प्रयत्नश्च द्वेष इच्छा तथैव च ।
उपाधिविशेषयुक्ता बुद्धिरेवास्ति तन्नये ॥ २४ ॥

ईशनिष्ठो ह्ययं ज्ञान—विशेषो धर्म इष्यते ।
अधर्मोऽप्येवमेवास्ति श्रीरामानुजदर्शने ॥ २५ ॥
चलनात्मककर्माऽपि श्रीरामानुजसम्मतौ ।
संयोगविशेषरूपं विद्यते नाऽत्र संशयः ॥ २६ ॥

तथावयवसंस्थान-विशेषो जातिरुच्यते ।
सासान्यरूपा सा नास्ति पृथग्द्रव्यं कदाचन ॥ २७ ॥

भावातिरिक्ताऽभावस्य पदार्थत्वं हि स्वीकृतम् ।
माध्वैर्वैशेषिकैर्न्याय-कोविदैश्च विशेषतः ॥ २८ ॥

अधिकरणस्वरूपादभावो नातिरिच्यते ।
इति मीमांसकाद्वैत-वेदान्तिभिरुदाहृतम् ॥ २९ ॥

श्रीमद्रामानुजाचार्यैरेवमेव हि स्वीकृतम् ।
इत्येषु मतभेदोऽपि मया प्रायेण दर्शितः ॥ ३० ॥

त्रैलोक्ये विद्यमाना ये पदार्थाः सन्ति भूरिशः ।
ते साकल्येन गणिताः कणभक्षमहोदयैः ॥ ३१ ॥
द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावः पदार्थाः सन्ति तन्नये ॥ ३२ ॥
क्षित्यप्तेजोमरुद्व्योम-कालदिग्देहिनो मनः ।
नवैवैतानि द्रव्याणि स्व-शास्त्रे गणितानि तैः । ३३ ॥
रूपं रसश्च गन्धश्च स्पर्शः संख्या ततः परम् ।
परिमाणं पृथक्त्वञ्च संयोगः सविभागकः ॥ ३४ ॥

परत्वञ्चापरत्वञ्च गुरुत्वञ्चद्रवत्वकम् ।
स्नेहः शब्दश्च बुद्धिश्च सुखं दुःखं तथैव च ॥ ३५ ॥
इच्छाद्वेषप्रयत्नाश्च धर्माधर्मौ तथा पुनः ।
संस्कारश्च गुणा एते चतुर्विंशतिसंख्यकाः ॥ ३६ ॥

उत्क्षेपणादि कर्माऽपि प्रोक्तं पञ्चविधं हि तैः ।
परापरविभेदेन सामान्यं द्विविधं तथा ॥ ३७ ॥
नित्ये द्रव्ये विद्यमाना विशेषाः सन्त्यनन्तकाः ।
समवायश्च सम्बन्ध एक एवास्ति तन्नये ॥ ३८ ॥

प्रागभावस्तथाध्वंसश्चात्यन्ताभाव एव च ।
अन्योन्याभाव इत्येते सन्त्यभावाश्चतुर्विधाः ॥ ३९ ॥
एतेषां हि पदार्थानां स्वरूपस्यापि निर्णयः ।
कणाददर्शने प्रोक्तो बोध्यो जिज्ञासुभिस्ततः ॥ ४० ॥

श्रीमन्तो गौतमाचार्याः न्यायशास्त्रप्रवर्तकाः।
निरदिक्षन् प्रमाणादीन् पदार्थान् षोडशैव च ॥ ४१ ॥
परन्त्वन्तर्भवन्त्येते पूर्वोक्तेष्वेव सप्तसु।
नैयायिकानामप्येषामन्तर्भावोऽस्ति सम्मतः ॥ ४२ ॥

मोक्षोपयोगितत्त्वानां ज्ञापनाय च गौतमः।
निरदिक्षन् पदार्थांस्तान् सर्वान् वादोपयोगिनः ॥ ४३ ॥
वादे वादे हि तत्त्वानां ज्ञानं संजायते यतः
वादैकसाध्यं तत्त्वानां ज्ञानं भवति तन्नये ॥ ४४ ॥

संशयादिपदार्थानामतो वादोपयोगिनाम्।
गौतमेन कृतं सम्यग् युक्तमेव निदर्शनम् ॥ ४५ ॥

पृथिव्यप्तेजोवायूनां भेदेनैषां चतुर्विधाः।
परमाणव उच्यन्ते चार्वाकैस्तत्त्वसंज्ञकाः ॥ ४६ ॥

प्रत्यक्षैकप्रमाणन्ते मन्यन्ते सुविचक्षणाः।
अतोऽनुमानशब्दाभ्यां सिद्धमर्थं न मन्वते ॥ ४७ ॥

शून्यमेवैकतत्त्वं हि बौद्धाः माध्यमिका विदुः।
विज्ञानस्कन्ध एवैकः योगाचारस्य सम्मतः ॥ ४८ ॥

रूप-विज्ञान-वेदना-संज्ञा-संस्कारसंज्ञकाः।
पञ्च स्कन्धा आन्तराश्च सौत्रान्तिकमते पुनः ॥ ४९ ॥

चतुरः परमाणूँश्च वाह्याँस्ते मन्वतेऽपराम्।
वैभाषिकाणामप्येते पदार्थाः सन्ति सम्मताः ॥ ५० ॥

समुदायसत्यमेवं सत्यं निरोधसंज्ञकम्।
दुःखसत्यं मार्गसत्यमेतत्तत्त्वचतुष्टयम् ॥ ५१ ॥

उत्पत्तिमदिदं सर्वमितिनिर्णयधीः पुनः ।
समुदायसत्यमुक्तं सौत्रान्तिकमतानुगैः ॥ ५२ ॥
सर्वं क्षणिकमित्येवं सत्यं निरोधपूर्वकम् ।
सर्वं शून्यमिति ज्ञानं दुःखसत्यं समुच्यते ॥ ५३ ॥
सर्वं निरात्मकमिति मार्गसत्यं विदुर्बुधाः ।
एतच्चतुष्टयं प्रोचुरार्यसत्यञ्च तद्विदः ॥ ५४ ॥
जीवाजीवाख्यभेदेन तत्त्वं संक्षेपतो द्विकम् ।
स्याद्वादिनो हि मन्यन्ते तत्प्रपञ्चः प्रदर्श्यते ॥ ५५ ॥
जीव आकाश-धर्मौ चाऽधर्मः पुद्गल एव च ।
एतानि पञ्च तत्त्वानि तत्प्रपञ्चः समुच्यते ॥ ५६ ॥
जीवाऽजीवाश्रवाख्यानि तथासम्बरनिर्जरौ ।
बन्धमोक्षौ च तत्त्वानि सप्तान्यान्यूचिरे क्वचित् ॥ ५७ ॥

## श्रीरामानुजमते पदार्थसंग्रहः

सर्वं पदार्थ-जातं हि द्विविधं परिकीर्तितम् ।
प्रमाणञ्च प्रमेयञ्च श्रीरामानुजदर्शने ॥ ५८ ॥
तत्र प्रमाणं त्रिविधं पूर्वाचार्यैः प्रदर्शितम् ।
प्रत्यक्षमनुमानञ्च शब्दश्चेति तृतीयकम् ॥ ५९ ॥
प्रमेयञ्चापि त्रिविधं श्रीरामानुजसम्मतौ ।
द्रव्यं गुणश्च सामान्यं षोढा द्रव्यं समुच्यते ॥ ६० ॥
जीव ईशो नित्यभूतिर्ज्ञानं प्रकृतिरेव च ।
कालश्चेति गुणानाञ्च भेदोप्यग्रे निरुच्यते ॥ ६१ ॥

सत्वं रजस्तमः शब्दः स्पर्शो रूपं रसस्तथा ।
गन्धः शक्तिश्च संयोग एते दश गुणाः स्मृता ॥ ६२ ॥
त्रिगुणात्मकं प्रधानं प्रकृतिर्द्रव्यमुच्यते ।
गुणद्रव्योभयं रूपं सामान्यं परिकीर्तितम् ॥ ६३ ॥
परोव्यूहश्च विभवश्चान्तर्यामी पुनस्तथा ।
अर्चावतारभेदेन चेश्वरः पञ्चधा स्मृतः ॥ ६४ ॥
मुक्तप्राप्यश्च वैकुण्ठवासी नारायणः स्वयम् ।
परात्मा पर इत्यादि-शब्दैरेवाभिधीयते ॥ ६५ ॥
वासुदेव: संकर्षणः प्रद्युम्नश्चानिरुद्धकः ।
प्रोच्यते व्यूहशब्देन चैक एव चतुर्विधः ॥ ६६ ॥
जन्माद्यर्थञ्च जगतः उपासार्थञ्च ब्रह्मणः ।
एकस्येशस्य चत्वारो भेदाः शास्त्रेषु कल्पिताः ॥ ६७ ॥
तत्र षड्भिः गुणैः पूर्णः वासुदेव उदाहृतः ।
ज्ञानं बलैश्वर्य-वीर्य-शक्ति-तेजांसि षड्गुणाः ॥ ६८ ॥
संकर्षणे तु ज्ञानस्य बलस्यापि प्रधानता ।
ऐश्वर्यवीर्ययोर्या प्रद्युम्नेऽपि प्रधानता ॥ ६९ ॥
अनिरुद्धे शक्ति-तेजः-स्वरूपञ्च गुणद्वयम् ।
विभवो मत्स्यकूर्मादिरवतारोऽपि कीर्तितः ॥ ७० ॥
अन्तर्यामी च जीवानां हृदयेऽवस्थितः परः ।
योगिभिश्चैव द्रष्टव्यः ध्यानाभ्यासबलान्वितैः ॥ ७१ ॥
अयमेवहि जीवानां नियन्ता प्रेरकः प्रभुः ।
अन्तस्तिष्ठन् हि जीवानामित्यादि श्रुति-सम्मतः ॥ ७२ ॥

देवालये स्थापितासु प्रतिमासु ह्यधिष्ठितः।
अर्चावतारो विज्ञेयः श्रीरामानुजदर्शने ॥ ७३ ॥

जीव ईश्वरतन्त्रोऽयं प्रतिदेहञ्च भिद्यते।
बद्ध-नित्य-मुक्तभेदात् त्रिविधः परिकीर्तितः ॥ ७४ ॥

बद्धाः संसारिणो जीवा मुक्ता वैकुण्ठमाश्रिताः।
श्रीमन्नारायणोपास्त्या संप्रोक्ता वैष्णवोत्तमैः ॥ ७५ ॥

कदाप्यस्पृष्टसंसारा अनन्त-गरुडादयः।
नित्याः समर्थिताः सर्वैर्विशिष्टाद्वैतवादिभिः ॥ ७६ ॥

नित्यविभूतिर्वैकुण्ठ-लोक एवास्ति तन्नये।
ज्ञानञ्च स्वप्रकाशं वै चेतनं बुद्धिरिष्यते ॥ ७७ ॥

रजः सत्व-तमो-रूप-गुणत्रयवती च या।
चतुर्विंशति तत्त्वात्मा नित्या सा प्रकृतिर्मता ॥ ७८ ॥

ज्ञानेन्द्रियाणि पञ्चापि पञ्चकर्मेन्द्रियाणि च।
भूतानि पञ्च पञ्चैव तन्मात्राश्च तथा पुनः ॥ ७९ ॥

प्रकृतिश्च महत्तत्वमहङ्कारो मनस्तथा।
एतानि प्रकृतेरेव परिवारा उदाहृताः ॥ ८० ॥

कालो जडो विभुश्चापि मन्यते शास्त्रवित्तमैः।
प्रोक्तः द्रव्यविवेकोऽयं विशिष्टाद्वैतदर्शने ॥ ८१ ॥

द्रव्याश्रिता दश गुणाः सत्वादय उदाहृताः।
शुद्धमिश्रविभेदेन सत्वं द्विविधमिष्यते ॥ ८२ ॥

शुद्धं नित्यविभूतौ स्यान्मिश्रं प्रकृतिमात्रके।
रजस्तमोभ्यां सहितं मिश्रमित्युच्यते बुधैः ॥ ८३ ॥

रजस्तु रागलोभादिहेतुभूतो गुणः स्मृतम्।
मोहप्रमादहेतुर्हि गुणस्तम उदीरितम् ॥ ८४ ॥

एतद् गुणद्वयं सर्व-प्रकृतौ वर्ततेतराम् ।
शब्दश्च पञ्चभूतेषु वर्तमानोऽस्ति सर्वदा ॥ ८५ ॥
स्पर्शः रूपं रसो गन्धश्चैते सर्वत्र विश्रुताः ।
षड् द्रव्यवृत्तिः संयोगः सामान्य गुण इष्यते ॥ ८६ ॥
अनित्योऽव्याप्यवृत्तिश्च संयोगः सर्वसम्मतः ।
शक्तिः षड्द्रव्यवृत्तित्वात् सामान्य गुण इष्यते ॥ ८७ ॥
कारणानाञ्च सर्वेषां कारणत्वप्रवर्तिका ।
इयमेव महाशक्तिः सर्वं व्याप्याधितिष्ठति ॥ ८८ ॥

धर्मभूतञ्च यज्ज्ञानं शुद्ध-सत्वं तथा प्रभा ।
एतत्रयं द्रव्यरूपं गुणरूपञ्च वर्तते ॥ ८९ ॥
संकोचविकाशशीलं तद्द्रव्यमभिधीयते ।
पराश्रितस्वभावत्वाद् गुणत्वं तस्य चेष्यते ॥ ९० ॥

एवं सर्वपदार्थानां संक्षेपाद्दर्शितं मया ।
श्रीरामानुजपद्धत्या यथाशास्त्रं विवेचनम ॥ ९१ ॥
कार्यञ्च कारणं योगः विधिर्दुःखान्त एव च ।
नकुलीशमतेनैते पदार्थाः पञ्च दर्शिताः ॥ ९२ ॥

तत्र कार्यमस्वतन्त्रं त्रिविधं परिकीर्तितम ।
विद्या कला पशुश्चेति नकुलीशस्य दर्शने ॥ ९३ ॥
तत्र जीव-गुणो विद्या जडं वस्तूच्यते कला ।
कार्यकारणभेदेन तच्चापि द्विविधं मतम् ॥ ९४ ।

क्षित्यादि पञ्चभूतानि पञ्चैव तद्गुणास्तथा ।
कार्यं दशविधं प्रोक्तं नकुलीशस्य दर्शने ॥ ९५ ॥
ज्ञानेन्द्रियाणि पञ्चापि पञ्चकर्मेन्द्रियाणि च ।
त्रीण्यन्तः करणान्याहुः कारणानि त्रयोदश ॥ ९६ ॥
स्वतन्त्रं कारणञ्चापि परमेश्वर एव च ।
जीवात्मेश्वर-सम्बन्धः योग इत्यभिधीयते ॥ ९७ ॥
धर्मार्थसाधको योऽस्ति स विधिः प्रोच्यते बुधैः ।
दुःखान्त एव मोक्षोऽस्ति नकुलीशस्य दर्शने ॥ ९८ ॥
शैवानाञ्च मते प्रोक्तं पदार्थत्रितयं यथा ।
पतिः पशुश्च पाशश्च शैवागमविशारदैः ॥ ९९ ॥
पतिः शिवः पशुर्योगः पाशश्चापि चतुर्विधः ।
मलः कर्म च माया च रोधशक्तिस्तथैव च ॥ १०० ॥
तत्र जीवेशयोरैक्यं प्रत्यभिज्ञामते मतम् ।
जडन्तु पूर्ववद्बोध्यं भिन्नाऽभिन्नन्तु चात्मनः ॥ १०१ ॥
अवशिष्टाः पदार्थास्तु नकुलीशवदेव हि ।
तद्वद्रसेश्वरे प्रोक्तं पदार्थानाञ्च पञ्चकम् ॥ १०२ ॥
मीमांसक-नये नायं पदार्थानां हि दृश्यते ।
प्रामुख्ये न विचारोऽत्र पाणिनीय-मतेऽपि च ॥ १०३ ॥
कतिचित् समवायादीन् पदार्थान् खण्डयन्ति ते ।
अतोऽनिषिद्धाऽनुमित न्यायेनैवानुमीयते ॥ १०४ ॥
तत्-खण्डिताऽवशिष्टा ये पदार्था न्यायसम्मताः ।
तत्रानुमीयते सम्यक् मीमांसाशास्त्रसम्मतिः ॥ १०५ ॥

श्रीपाणिनीयाश्चाऽद्वैत-वेदान्तमतपोषकाः ।
प्रतीयन्ते यतस्तैर्हि विवर्तोऽभ्युपगम्यते ॥ १०६ ॥

सांख्ये चतुर्विधं तत्त्वं प्रोक्तं श्रीकपिलर्षिणा ।
आद्यञ्च प्रकृतिमात्र-स्वरूपं समुदाहृतम् ॥ १०७ ॥
केवला विकृतिश्चैव द्वितीयं तत्त्वमुच्यते ।
उभयात्मकं तृतीयं तुर्यं त्वनुभयात्मकम् ॥ १०८ ॥

आद्या च मूला प्रकृतिर्विकृतिर्नास्ति कस्यचित् ।
सा चैवास्याऽखिलस्यापि जगतो मूलकारणम् ॥ १०९ ॥
महत्तत्त्वमहङ्कारः पञ्चतन्मात्रकं तथा ।
प्रोक्तान्युभयरूपाणि सप्तैतानि विवेचने ॥ ११० ॥

ज्ञानेन्द्रियाणि पञ्चापि पञ्च कर्मेन्द्रियाण्यपि ।
क्षित्यादि पञ्चभूतानि षोडशञ्च मनस्तथा ॥ १११ ॥
षोडशैतानि तत्त्वानि विकृतिरेव प्रोच्यते ।
तत्त्वान्तरस्य कस्यापि नैभ्य उत्पत्तिसम्भवः ॥ ११२ ॥

पुरुषो नैव विकृतिर्नापि प्रकृतिरिष्यते ।
अतोऽनुभयरूपोऽसौ प्रोच्यते सांख्यकोविदैः ॥११३॥
सर्वाण्येतानि तत्त्वानि पातञ्जलमताश्रयैः ।
स्वीक्रियन्ते महाप्राज्ञैरीश्वरोऽपि विशेषतः ॥११४॥

प्रायोऽत्र सर्वाचार्याणां पदार्थाः दर्शिता मते ।
अद्वैतवादिनामग्रे मतं सम्यग् विविच्यते ॥११५॥
दृग्रूप एक एवास्ति पदार्थश्चात्मसंज्ञकः ।
अनाद्यविद्यया तत्र द्वैतन्तु परिकल्पितम ॥११६॥

तदनुसृत्य दृग् दृश्यं पदार्थद्वयमुच्यते ।
आत्माऽनात्मेति शब्देन प्रोच्यतेऽद्वैतवादिभिः ॥११७॥

तत्राद्यः किल दृग्रूपः त्रिविधः परिकल्पितः ।
ईशो जीवश्च साक्षी चाऽद्वैतवेदान्तिनां नये ॥११८॥

अज्ञानं कारणीभूतं यदस्मदद्वैतवादिनाम् ।
तदुपाधिविशिष्टोयमीश्वरोऽस्ति स च त्रिधा ॥ ११९ ॥

ब्रह्मविष्णुमहेशाख्यः रजः सत्त्वतमो गुणैः ।
एक एव त्रिधाभिन्नो वेदान्ते परिकल्पितः ॥ १२० ॥

अन्तःकरणसंस्कारावच्छिन्नं यत्तु वर्तते ।
अज्ञानं तद्विशिष्टो हि जीव इत्यभिधीयते ॥ १२१ ॥

तत्तादुपाध्यवच्छिन्नः जीव ईशश्च सम्मतः ।
उपाधिरहितोऽखण्डः साक्षी केवल उच्यते ॥ १२२ ॥

प्रपञ्चः दृश्यशब्देन प्रोच्यते शास्त्रवित्तमैः ।
अव्याकृतामूर्त-मूर्त भेदेनायमपि त्रिधा ॥ १२३ ॥

अविद्याऽथ तया सार्धं चितः सम्बन्ध इत्यपि ।
तस्याञ्चापि चिदाभासः जीवेश्वरभिदातथा ॥ १२४ ॥

एतच्चतुष्टयं प्राहुरनादित्वेन हेतुना ।
अव्याकृतमिति प्राञ्चोऽद्वैतवेदान्तवादिनः ॥ १२५ ॥

समुत्पन्नान्यविद्यातः शब्दस्पर्शादिकानि तु ।
सूक्ष्माणि पञ्चभूतानि तमः षष्ठं तथाविधम् ॥ १२६ ॥

एतान्यमूर्तशब्देन प्रोच्यन्ते शास्त्रवित्तमैः ।
प्राक् पञ्चीकरणात्तेषां यतो नैवास्ति मूर्तता ॥ १२७॥

तमस्त्वमूर्तमेवास्ति सर्वदा नात्र संशयः ।
पञ्चीकारेण भूतानां मूर्तावस्था प्रजायते ॥ १२८ ॥
अमूर्तावस्थऽभूतानां प्रत्येकं सात्विकांशतः ।
ज्ञानेन्द्रियस्यैकैकस्य चोत्पत्तिर्जायतेतराम् ॥ १२९ ॥
सर्वेषां सात्विकांशेभ्यो मिलितेभ्यो मनस्तथा ।
समुद्भवति सर्वेषामिन्द्रियाणां प्रवर्तकम् ॥ १३० ॥
प्रत्येकं राजसांशेभ्यः कर्मेन्द्रिय-समुद्भवः ।
मिलितेभ्यश्च सर्वेभ्यः प्राणस्योत्पत्तिरिष्यते ॥ १३१ ॥
ततस्तेषां हि भूतानां पञ्चीकरणसम्भवः ।
परस्परं मिश्रणं हि पञ्चीकरणमुच्यते ॥ १३२ ॥
द्विधाविधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्चते ॥ (वे०पं०) १३३॥
तेनैव पञ्चभूतानां मूर्तावस्था प्रजायते ।
प्रपञ्चस्यास्य सर्वस्य तत एव समुद्भवः ॥ १३४ ॥
भावाभावपदार्थानामेवं दर्शनभेदतः ।
विवेचनं यथाशास्त्रमत्र सम्यक् प्रदर्शितम् ॥ १३५ ॥
एतावता निबन्धेन मूलतत्त्वान्यशेषतः ।
प्रदर्श्य तद्विकाराश्च पदार्था दर्शिताः मया ॥ १३६ ॥

इति पदार्थविवेचनं नाम नवमोऽध्यायः ।

## मूलकारणे आरम्भादिवाद विचारः

अथ आरम्भवादादि-विषये शास्त्र-सम्मतिः ।
प्रदर्श्यतेऽत्र विदुषा प्रेक्षणीया प्रयत्नतः ॥ १ ॥

कारणं त्रिविधं प्रोक्तं समवाय्यादिभेदतः ।
त्रिविधात्कारणाद्भिन्नं कार्यं वैशेषिकाः विदुः ॥ २ ॥

निमित्ताऽसमवायिभ्यां कारणाभ्यान्तु सर्वदा ।
कार्यं भिन्नन्तु सर्वेषामिष्टमेव न संशयः ॥ ३ ॥

उपादानात्तु कार्यस्य न भेदो मन्यते परैः ।
हित्वा गौतम-काणादौ ताभ्यां भेदो हि मन्यते ॥ ४ ॥

पटस्तन्तुभिरारब्धः स्वोपादानाच्च कारणात् ।
तन्तूनां समुदायाद्धि भिन्न एवास्ति तन्नये ॥ ५ ॥

समवायिकारणं यत् तदुपादानमुच्यते ।
अयमारम्भवादोऽत्र संक्षेपेण प्रदर्शितः ॥ ६ ॥

उपादान-कारणानां तन्त्वादीनाञ्च योऽस्ति वै ।
समुदायः स एवाऽस्ति पटो नान्यः कदाचन ॥ ७ ॥

पटादिरूपं यत् कार्यं तन्त्वादिभ्यो न भिद्यते ।
किन्तु तन्त्वादि-संघात-रूपं तदिति निश्चयः ॥ ८ ॥

अयं संघातवादश्च वैभाषिक-मतानुगैः ।
बौद्धैः सौत्रान्तिकैश्चापि मन्यते बुद्धिमद्वरैः ॥ ९ ॥

एतन्मते च सर्वस्य क्षणिकत्वेन हेतुना ।
उत्पद्यते प्रतिक्षणं संघातोऽपि नवोनवः ॥ १० ॥

स्वविनाशस्यद्वारैव चोपादानं हि कारणम् ।
कार्यमुत्पादयत्येषा सौत्रान्तिकमतस्थितिः ॥ ११ ॥

दृश्यमानस्य कार्यस्य सद्रूपं नैव कारणम् ।
विद्यते किन्तु शून्यं हि कार्यरूपेण भासते ॥ १२ ॥

एवं ब्रुवन्ति बौद्धान्तर्गता माध्यमिकाः पुनः ।
असत्ख्यातिञ्चतामेव मन्यन्ते बौद्धपण्डिताः ॥ १३ ॥
विज्ञानवादिनो बौद्धाः योगाचारमतानुगाः ।
विज्ञानरूपमात्मानं मन्यन्ते सुविचक्षणाः ॥ १४ ॥

प्रतिक्षणं नवनवेनैव बाह्यघटादिना ।
रूपेण विज्ञानात्मैव भासमानो हि दृश्यते ॥ १५ ॥
आत्मख्यातिमिमामेव योगाचारमतानुगाः ।
मन्यन्ते पण्डिताः सर्वे इति बौद्धमतस्थितिः ॥ १६ ॥

उपादानकारणस्याऽन्यथाभावस्तु तात्विकः ।
कार्यमित्युच्यते सांख्यपातञ्जलमतानुगैः ॥ १७ ॥
एष परिणामवादः सांख्यैः पातञ्जलैस्तथा ।
रामानुजार्यवर्यैश्च सादरं मन्यतेतराम् ॥ १८ ॥

अतात्विकोऽन्यथाभाव उपादान य योऽस्ति सः ।
शङ्कराचार्यवर्यैस्तु विवर्तः समुदाहृतः ॥ १९ ॥
दृष्टिसृष्ट्याख्यवादोऽपि यो लोके गीयते सदा ।
विवर्तवादस्यैवान्तर्भूतोऽयमिति नापरः ॥ २० ॥
दृष्टिकाले च या सृष्टिः सा दृष्टिसृष्टिरुच्यते ।
शुक्तौ हि रजताभासो विद्यतेऽत्र निदर्शनम् ॥ २१ ॥
यत्र येन यदा यच्च यथा दृष्टं तथा तदा ।
तत्र तत् तेन रूपेण सृज्यते तदविद्यया ॥ २२ ॥

यथा प्रदेशे कस्मिंश्चिन् मन्देन तमसावृते ।
प्रातःकाले च रामेण रजतं दृश्यते यदि ॥ २३ ॥

रजतं तच्च तस्यैवाऽविद्ययोत्पद्यते यदा ।
यतः यदानीं श्यामस्य रजतं न प्रतीयते ॥ २४ ॥

रामस्यापि च नान्यत्र रजतं हि प्रतीयते ।
पूर्वं पश्चाच्च तस्यैव रजतं न प्रतीयते ॥ २५ ॥

तथैवायं प्रपञ्चोऽपि येन यत्र यदा यथा ।
दृश्यते तत्र तस्यैवाऽविद्यया सृज्यते तथा ॥ २६ ॥

यत्रापि जीवस्यैकत्वं मन्यन्ते ये विपश्चितः ।
तेषां मते प्रपञ्चोऽयमेक एवास्ति नापरः ॥ २७ ॥

ये तु नानात्वमिच्छन्ति जीवानां शास्त्रकोविदाः ।
तेषां मते प्रपञ्चस्य नानात्वं युज्यतेतराम् ॥ २८ ॥

देवदत्तेन दृष्टो यो स एवायं घटोऽस्ति भोः !
इत्यादि प्रत्यभिज्ञा तु सादृश्यातिशयान्मता ॥ २९ ॥

जीवस्यैकत्व-नानात्व-पक्षयोरुभयोरपि ।
अविद्योपाधिको जीवोऽद्वैतवेदान्तिनां नये ॥ ३० ॥

तान्त्रिका अपि चाद्वैतवादिनः सन्ति नापरे ।
मूलकारणविषये प्रतिबिम्बन्तु मन्वते ॥ ३१ ॥

एतन्मते च नारम्भवादः स्वीक्रियते यतः ।
भज्येताऽद्वैतसिद्धान्तः कार्यकारणभेदतः ॥ ३२ ॥

ब्रह्मणः परिणामोऽपि प्रपञ्चो नैव विद्यते ।
प्रसज्येत विकारित्वं यतो हि परिणामिनः ॥ ३३ ॥

विवर्तभूतं नाप्येतद् ब्रह्मणो जगदिश्यते ।
यतो जगत् प्रतीतौ च न प्रतीयेत ब्रह्म तत् ॥ ३४ ॥

परिस्फुरति सर्वत्र भ्रमेष्वध्यस्तमेव हि ।
शारीरके च संक्षिप्ते प्रोक्तं सर्वज्ञस्वामिभिः ॥ ३५ ॥
यथा रज्जौ हि सर्पस्य प्रतीति-समये न हि ।
रज्ज्वाः भानं प्रभवति न तथा ब्रह्मणो भवेत् ॥ ३६ ॥

घटः सन् घटोऽस्तीत्यादौ सद्रूपेण च ब्रह्मणः ।
प्रतीतिमभिमन्यन्ते सर्वेऽप्यद्वैतवादिनः ॥ ३७ ॥
एवं विवर्तारम्भादि-वादे दोषस्य दर्शनात् ।
प्रतिबिम्बवादमेव मन्यन्ते तन्त्रकोविदाः ॥ ३८ ॥
बहिस्थितस्याननादेर्वस्तुनो दर्पणे यथा ।
दृश्यते प्रतिबिम्बं हि ब्रह्मण्यपि तथा जगत् ॥ ३९ ॥
ब्रह्मणोऽन्तर्गतत्वेन ब्रह्मणि प्रतिबिम्बितम् ।
विभासते जगत् सर्वं यथा दर्पणगं मुखम् ॥ ४० ॥

परन्त्वेतन्मतेऽप्येवं शङ्का समुपजायते ।
सावधानेन तज्ज्ञात्वा समधेया विपश्चिता ॥ ४१ ॥
दर्पणाद् भिन्नमेवास्ति बिम्बभूतं यथा मुखम् ।
तथैव ब्रह्मणो भिन्नं बिम्बभूतं जगद् भवेत् ॥ ४२ ॥

तथा चाद्वैतसिद्धान्त-भङ्गस्तु तदवस्थितः ।
एतच्छङ्कां निराकर्तुं तान्त्रिकैरिदमुच्यते ॥ ४३ ॥
सकाशाद् ब्रह्मणो भिन्नं जगन्नास्त्येव नो मते ।
तथा चाद्वैतसिद्धान्त-भङ्गशङ्का न जायते ॥ ४४ ॥

परन्त्वेतन्मते मूले कुठाराघातसम्भवः ।
प्रतिबिम्बस्य सर्वत्र बिम्बाधीनव्यवस्थितेः ॥ ४५ ॥

विम्बाभावेन नैवास्ति प्रतिविम्बस्य सम्भवः ।
अतो हि प्रतिविम्बस्य वादो नैवात्र युज्यते ॥ ४६ ॥

अत्रोच्यते समाधानं तन्त्रशास्त्रविशारदैः ।
श्रुत्वा मत्वा निदिध्यास्यमात्मसम्पत्ति-हेतवे ॥ ४७ ॥

प्रतिविम्बं विम्बतन्त्रमित्येवं प्रत्ययान्मतम् ।
प्रतिविम्बस्य विम्बं हि कारणं सत्यमेवतत् ॥ ४८ ॥

परन्तु तदुपादानं कारणं नैव विद्यते ।
निमित्तकारणं विम्बं प्रतिविम्बस्य चेष्यते ॥ ४६ ॥

कारणं यदुपादानं तत्कार्येऽन्वेति सर्वदा ।
कार्यात्पृथङ्न कुत्रापि दृश्यते तदवस्थितिः ॥ ५० ॥

प्रतिविम्बमिदं विम्बमिदञ्चेति निदर्शनात् ।
पार्थक्येनोभयोः सिद्धं निमित्तं कारणं हितत् ॥ ५१ ॥

तत्तद्विशेषरूपेण निमित्तं कारणन्तु यत् ।
अपेक्षितं न कार्यस्य चोत्पत्तौ नियमेन तत् ॥ ५२ ॥

घटोत्पत्तौ निमित्तस्य दण्डस्य विरहेऽपि च ।
हस्तेन चक्रभ्रमणे घटोत्पत्तिर्हि दृश्यते ॥ ५३ ॥

तथा च प्रतिविम्बस्य प्रपञ्चस्योद्भवे खलु ।
निमित्तकारणत्वेन विम्बापेक्षा न विद्यते ॥ ५४ ॥

किन्तु दण्डस्थले हस्तः दण्डस्य विरहेऽपि च ।
चक्रभ्रमं समुत्पाद्योत्पादयति घटं यथा ॥ ५५ ॥

तथाविम्बस्थले माया विम्बाभावेऽपि ब्रह्मणि ।
स्व-सम्बन्धं समुत्पाद्य प्रतिविम्बं करोति वै ॥ ५६ ॥

## मूलकारणे एव मतभेदः अन्यत्र व्यवस्था

पूर्वोक्तो मतभेदोऽस्ति केवले मूलकारणे ।
यथासम्भवमन्यत्र व्यवस्था दृश्यते यतः ॥ ५७ ॥

शुक्तिकायाञ्च रजत-भ्रमस्थाने निगद्यते ।
शुक्तिर्विवर्तोपादानं सांख्यैः पातञ्जलैरपि ॥ ५८ ॥

परिणामवादिनोऽपि सांख्याः पातञ्जलाः पुनः ।
परिणामं न मन्यन्ते शुक्तिकारजतस्थले ॥ ५९ ॥

इयं [illegible]निर्वचनीया ख्यातिरित्युच्यते बुधैः ।
सांख्यैः पातञ्जलैश्चैवाऽद्वैतवेदान्तिभिस्तथा ॥ ६० ॥

कलधौतस्य शुक्तौ हि प्रतीतिसमये यतः ।
अनिर्वाच्यं हि रजतं जन्यते खलु तन्मये ॥ ६१ ॥

आरम्भवादिनः सर्वे न्यायवैशेषिकानुगाः ।
आरम्भवादं नैवात्र स्वीकुर्वन्ति विपश्चितः ॥ ६२ ॥

रजतं विद्यते नैव रजतस्य भ्रमस्थले ।
न चाप्युत्पद्यते तत्र किन्तु तेषामिदं मतम् ॥ ६३ ॥

शुक्तिः रजतरूपेण भासते दोषकारणात् ।
इयमेवाऽन्यथाख्यातिरुच्यते तैर्महात्मभिः ॥ ६४ ॥

श्रीमद्रामानुजाचार्या एवमत्र ब्रुवन्ति वै ।
[illegible]ति [illegible] प्रतीयेत कर्हिचित् ॥ ६५ ॥

प्रतीयते यतस्तत्र रजतं तेन हेतुना ।
[illegible]वं रजतस्यापि मन्तव्यं शुक्तिकास्थ[illegible] ॥ ६६ ॥

एवञ्च रजतस्यात्र प्रतीति-समये खलु ।
नोत्पत्तिमभिमन्यन्ते विशिष्टाद्वैतवादिनः ॥ ६७ ॥

प्रतीतिसमये चात्र रजतोत्पत्ति स्वीकृतौ ।
विकल्पस्य समाधानं नैव किञ्चिद् भविष्यति ॥ ६८ ॥

रजतोत्पादिका शुक्तौ सामग्री वर्तते न वा ? ।
न विद्यते चेद्धि कथं रजतोत्पत्ति-सम्भवः ॥ ६६ ॥

उत्पद्यतेऽत्र दोषेण तदानीं रजतं किल ।
इत्युक्तिर्नैव विश्वास-योग्या भवति कर्हिचित् ॥ ७० ॥

यतो दोषस्य विरहे यावदंशैर्हि वस्तुनः ।
यथार्थत्वेनाभिमतं ज्ञानं भवितुमर्हति ॥ ७१ ॥

दोष सत्वे च दोषो हि केनाप्यंशेन न्यूनताम् ।
ततः सम्पादयेज्ज्ञाने न त्वाधिक्यं कथञ्चन ॥ ७२ ॥

शुक्तेर्यथार्थ-विज्ञाने रजतांशो न भासते ।
दोषेणाप्यतएवात्र नोत्पाद्यं रजतं भवेत् ॥ ७३ ॥

अथवा तत्र रजतप्रतीतेरनुरोधतः ।
तदुत्पादानसामग्री कल्प्यते इति मन्यते ॥ ७४ ॥

तदाऽस्माकं मतस्यैव पुष्टिरभ्युपगम्यते ।
किन्तु तत्रापि भेदोऽस्ति स चाप्यग्रे प्रदर्श्यते ॥ ७५ ॥

सामग्र्योत्पद्यमानं यद् रजतं दृश्यते पुरः ।
तच्छुक्त्युत्पत्तिसमये शुक्त्यैव सह जायते ॥ ७६ ॥

न तु प्रतीति-समये रजतोत्पत्ति सम्भवः ।
शुक्त्यंशेन तिरोधानान्न पूर्णं रजतस्य धीः ॥ ७७ ॥

रजतोत्पत्तिसामग्र्याः न्यूनत्वेनैव हेतुना ।
रजतांशः स्वल्प एव शुक्त्यंशश्चाधिकस्ततः ॥ ७८ ॥

शुक्त्यंशस्याधिकस्यापि दोषेण तिमिरादिना ।
प्रतिघाताच्च स्वल्पोऽपि रजतांशः प्रतीयते ॥ ७६ ॥
दोषस्यापगमे तत्र शुक्त्यंशो हि प्रतीयते ।
रजतांशश्च नोतत्र प्रतीतेर्विषयो मतः ॥ ८० ॥

शुक्त्यंशस्य हि भूयस्त्वाद् दृष्टेश्च प्रतिघाततः ।
विद्यमानञ्च रजतं तदानीं न प्रतीयते ॥ ८१ ॥
भान्यपि विद्यमानानि यथा सौरेण तेजसा ।
चक्षुष्युपहते नैव प्रतीयन्ते कदाचन ॥ ८२ ॥

एवमेव हि सर्वत्र विचारोस्ति भ्रमस्थले ।
इमामेव च सत्ख्यातिं प्रवदन्ति विपश्चितः ॥ ८३ ॥
अत्र मीमांसकाः प्राहुः रजतस्य भ्रमस्थले ।
रजतं सुतरां नास्ति न च तत्र प्रजायते ॥ ८४ ॥

इदं रजतमित्यस्मिन् ज्ञाने यद् भासतेतराम् ।
इदमंशस्य, तज्ज्ञेयं प्रत्यक्षं रजतस्य नो ॥ ८५ ॥
तत्सादृश्याच्च रजत-संस्कारस्योद्भवेन तु ।
रजतस्मरणं तत्र नानुभूतिर्हि जायते ॥ ८६ ॥

इदमंशस्य प्रत्यक्षं स्मरणं रजतस्य च ।
इदं ज्ञानद्वयं तत्र प्राहुर्मीमांसकानुगाः ॥ ८७ ॥
इदमंशस्य प्रत्यक्षात्परोक्षांशो निरुध्यते ।
यः प्रत्यक्षेऽपि शुक्त्यंशः स्मरणात्स विरुध्यते ॥ ८८ ॥

विरुद्धांशयोर्द्वयोश्च दोषेणाऽप्रतिभासने ।
अन्योन्यस्यापि नो तत्र वैलक्षण्यं प्रतीयते ॥ ८६ ॥

ज्ञानद्वयं तथा चैकं ज्ञानमेवावभासते ।
इयमख्यातिराख्याता मीमांसकमतानुगैः ॥ ६० ॥
एवं प्रसङ्गतः सर्वाः ख्यातयोऽपि प्रदर्शिताः ।
तत्तन्मतानुसारेण ज्ञातव्याः ज्ञातुमिच्छता ॥ ६१ ॥
सांख्याः पातञ्जलाश्चापि रजतस्य भ्रमस्थले ।
विवर्तवादं मन्यन्ते परिणामैकवादिनः ॥ ६२ ॥
तथा दध्यादि रूपेण पयसः परिणामिताम् ।
स्वीकुर्वन्ति महाप्राज्ञाः शङ्करार्यमतानुगाः ॥ ६३ ॥
परन्तु तत्रारम्भाख्यं वादं न्यायविशारदाः ।
वैशेषिकाश्च मन्यन्ते यथा ते मूलकारणे ॥ ६४ ॥
तन्तोः पटादि विषयेऽप्येवमेव निदर्शनम् ।
सर्वैरपि च संघातः धान्यराशौ हि मन्यते ॥ ६५ ॥
विवर्तवादं मन्वानाः श्रीशङ्करमतानुगाः ।
तत्र कारणभेदेन परिणामञ्च मन्वते ॥ ६६ ॥
मायादिपदवाच्याया आत्मशक्तेश्च तन्नये ।
परिणाम्युपादानत्वं स्वीकृतञ्चात्रतैः स्वयम् ॥ ६७ ॥
मूलकारणभिन्नेषु सर्वेषु विषयेष्वपि ।
यथासम्भवमेतेषां व्यवस्था दृश्यते मते ॥ ६८ ॥
इति आरम्भवादादि विचारोनाम दशमोऽध्यायः ।

## कार्यकारणयोर्भेदाऽभेदविचारः

अत्रेदमपि बोद्धव्यमुपादानाच्च कारणात् ।
आरम्भवादे स्वस्मात्तद् भिन्नं कार्यं प्रजायते ॥ १ ॥

तथा च कारणात्कार्यं भिन्नमेवेति निश्चिते ।
तयोस्तृतीयः सम्बन्धोऽवश्यकल्प्यो भविष्यति ॥ २ ॥

अतो हि समवायाख्यः सम्बन्धः स्वीकृतश्चतैः ।
वैशेषिकैस्तथा तत्र न्यायशास्त्रविशारदैः ॥ ३ ॥

पटश्च तन्तवश्चेति पार्थक्येन कदाचन ।
वस्तुद्वयं न तत्रापि पटे समुपलभ्यते ॥ ४ ॥

तथा चानुपलब्ध्याऽत्र बाधितञ्चापि कल्प्यते ।
कार्यं हि कारणादभिन्नमित्येकं तस्य गौरवम् ॥ ५ ॥

कार्य-कारणभेदे हि सम्बन्धश्चापि कल्प्यते ।
इत्येकमपरं तस्य गौरवञ्चातिरिच्यते ॥ ६ ॥

एवमारम्भवादेऽस्मिन् कार्यकारणयोर्मिथः ।
भेद-स्वीकरणेऽनेके दोषा आयान्ति निश्चितम् ॥ ७ ॥

तथापि कणभक्षाद्युपादानामिह विद्यते ।
आग्रहः कथमित्यत्र प्रोच्यते हि तदाशयः ॥ ८ ॥

पटतन्त्वोरभेदे हि तन्तुष्वपि पटस्य धीः ।
जायेत तन्तुरूपस्य पटाऽभिन्नत्व हेतुना ॥ ९ ॥

पटबुद्धिश्च नो तन्तौ कदाचित् क्वापि दृश्यते ।
पटशब्दश्च केनापि नैव तत्र प्रयुज्यते ॥ १० ॥

पेटन जायमानं यत् कार्यं प्रावरणादिकम् ।
सम्पद्यमानं केनाऽपि दृश्यते नैव तन्तुभिः ॥ ११ ॥

पटाकारश्च कुत्रापि दृश्यते नैवतन्तुषु ।
तन्तूनाञ्च बहुत्वेऽपि पटस्यैकत्व मिष्यते ॥ १२ ॥

इत्येवं बुद्धिभेदेन कार्यभेदादिभिस्तथा ।
कार्यकारणयोर्भेदे पक्षपातस्तु युज्यते ॥ १३ ॥
कारणानाञ्च व्यापारात् प्राग् यत् कार्यं न विद्यते ।
घटादिरूपं तत्तस्मात् कारणादुपजन्यते ॥ १४ ॥
सत्तया सह सम्बन्ध उत्पत्तिस्तन्मते मता ।
अयमेव ह्यसत्कार्य-वाद इत्युच्यते बुधैः ॥ १५ ॥
वैशेषिकाणां सर्वेषामिदमेव स्फुटं मतम् ।
अन्वमन्यत तत्सर्वं गौतमो न्यायवित्तमः ॥ १६ ॥

अभेदः

संघातवादिनो बौद्धाः सांख्याः पातञ्जलास्तथा ।
कार्यकारणयो र्भेदं न मन्यन्ते कथञ्चन ॥ १७ ॥
अद्वैतवादिनान्त्वेष भेद एव न युज्यते ।
तन्मते त्वेक एवास्ति पदार्थो ब्रह्मलक्षणः ॥ १८ ॥
कार्यकारणयोर्भेदाभावत्वेनैव हेतुना ।
समवायस्य नैवास्ति कल्पनायाः प्रयोजनम् ॥ १९ ॥
अवस्थान्तरसम्प्राप्तिरुपादानस्य यत् पुनः ।
तदेव प्रोच्यते कार्यं सर्वैरद्वैतवादिभिः ॥ २० ॥
अवस्थायाः प्रभेदेन बुद्धिभेदस्य सम्भवात् ।
कार्यकारणयोर्भेदस्तस्माद्धेतोर्न सिध्यति ॥ २१ ॥
आरम्भवादे किन्त्वस्मिन् पटोत्पत्तेरनन्तरम् ।
अविनष्टास्तन्तवोऽपि सन्त्येवात्र न संशयः ॥ २२ ॥
तथा च तन्तुपटयोर्द्वयोः सत्वाच्च वस्तुनोः ।
परिमाणस्य द्वैगुण्यमुपलभ्येत सर्वदा ॥ २३ ॥

नचोपलभ्यते तस्माद् भेदो नैवात्र युज्यते ।
कार्यन्तु कारणावस्था-विशेषः प्रोच्यते बुधैः ॥ २४ ॥
यथा च तन्तवोऽवस्थाविशेषेणाभिव्यञ्जनम् ।
उपादानस्य चोत्पत्तिरिष्यतेऽद्वैतवादिनाम् ॥ २५ ॥
तथावस्था-विशेषस्य तस्य तस्य च वस्तुनः ।
आविर्भाव-तिरोभावौ भवतो हि स्वभावतः ॥ २६ ॥
उपादानकारणानां तन्त्वादीनाञ्च यत् पुनः ।
पटाद्यवस्था-सम्प्राप्तौ वर्तते प्रतिबन्धकम् ॥ २७ ॥
तद्दूरीकरणं सर्व-निमित्तानां प्रयोजनम् ।
तत्रैव चोपयुज्यन्ते कुविन्दादीनि सर्वथा ॥ २८ ॥
निमित्तकारणैरेव प्रतिबन्धनिराकृतौ ।
उपादानं प्रभवति कार्यरूपेण भासितुम् ॥ २९ ॥
तन्तुरूपेण चोत्पत्तेः पूर्वमप्यस्तितद्वस्तुनः ।
कार्यं पटात्मकं ह्येषां मते सत्कार्यवादिनाम् ॥ ३० ॥
पटरूप न्वयत्कार्यं पटे दग्धेऽपि तद्वस्तुनः ।
भस्माङ्गारादिरूपेण विद्यते नात्र संशयः ॥ ३१ ॥
सान्वयः सर्वभूतानां नाशो भवति तन्नये ।
निरन्वयो न कस्यापि नाशः संजायते क्वचित् ॥ ३२ ॥
तप्तायो गोलके वारि पतितं यन्न दृश्यते ।
तच्चाप्यदृश्यावयव-रूपेणास्त्येव तन्नये ॥ ३३ ॥
तथा च कारणस्यैव कार्यरूपेण भासनात् ।
कार्यकारणयो र्भेदाभावस्त्वेतन्नये स्फुटः ॥ ३४ ॥

इति कार्यकारणयोर्भेदाभेद विचारो नाम एकादशोऽध्यायः ।

## अध्यास प्रकारः

अथाध्या सप्रकारोऽपि संक्षेपेण प्रदर्श्यते ।
श्रीशङ्करार्यपादानां सुव्यवस्थित-वर्त्मना ॥ १ ॥
अनादिः प्रथमो मायाध्यासः शुद्धे चिदात्मनि ।
भवतीत्यवगन्तव्यं शङ्कराचार्य-सम्मतौ ॥ २ ॥
तादृशाध्यास संयुक्ते ततस्तत्र चिदात्मनि ।
मायापरिणामभूतोऽहङ्कारोध्यस्यतेतराम् ॥ ३ ॥
अहङ्कारस्य चाध्यासः केवले न चिदात्मनि ।
तस्य स्वयं प्रकाशत्वान्न तदज्ञानसम्भवः ॥ ४ ॥
केनचित् किल रूपेणाऽज्ञातं यद् वस्तु वर्तते ।
तदेव सर्वाध्यासस्याऽधिष्ठानं युज्यते यतः ॥ ५ ॥
अनादित्वाच्च प्रथमोध्यासस्य नैव युज्यते ।
अधिष्ठानस्य चाऽज्ञानाऽपेक्षा शास्त्रकृतां मते ॥ ६ ॥
अहङ्काराध्यासयुक्ते तस्मिन्नेव चिदात्मनि ।
अहङ्कारस्य धर्माणामिन्द्रिया[illegible] [illegible] ।
काम-संकल्प-कारणत्वादीनामध्यास उच्यते ॥
[illegible]त्वाहङ्करोऽध्यासाऽधि[illegible] [illegible] ॥ ८ ॥
अहमिच्छाम्यहं काण इत्यादि व्यवहारतः ।
अहङ्का[illegible]स-युक्ता चिदधिष्ठानमुच्यते ॥ ९ ॥
इन्द्रियाणामहङ्कारेऽध्यासो नैव हि युज्यते ।
अहं चक्षुरहं श्रोत्रमित्यादिव्यवहारतः ॥ १० ॥

नन्वेवमिन्द्रियाणाञ्चाऽध्यासाभावे कथं पुनः ।
तद्धर्माध्यास इत्युक्तमितिचेदुत्तरं शृणु ॥ ११ ॥
यतोऽहङ्कार-संयुक्ते नेन्द्रियाध्यास आत्मनि ।
तथापि मायाध्यासेनाऽवच्छिन्नेऽध्याससम्भवात् ॥ १२ ॥
पश्यामि चक्षुषेत्यादि-प्रतीतिर्दृश्यतेतु या ।
अध्यस्तानामिन्द्रियाणां बोद्धव्या सा चिदात्मनि ॥ १३ ॥
भूतभौतिक-सकल-प्रपञ्चस्य चिदात्मनि ।
कल्पितत्वे नेन्द्रियाणामप्यध्यासो हि युज्यते ॥ १४ ॥
देहस्यापि मनुष्यादि-विशेषेण स्वरूपतः ।
अध्यासो युज्यतेऽहङ्कारावच्छिन्ने चिदात्मनि ॥ १५ ॥
अहं मनुष्य इत्यादि-प्रतीतेरनुरोधतः ।
देहाध्यासो मनुष्यादि-विशेषेणैव युज्यते ॥ १६ ॥
अहं देहोऽस्मि चेत्यादि-प्रतीति-विरहेणतु ।
सामान्यरूपेणाध्यासो नैव देहस्य युज्यते ॥ १७ ॥
एवं मनुष्याद्यध्यास-विशिष्टे हि चिदात्मनि ।
स्थूलत्वादि-देहधर्मा अध्यस्यन्ते सुनिश्चितम् ॥ १८ ॥
अहं स्थूलोऽस्मि चेत्यादि-प्रतीतेरनुरोधतः ।
अध्यासो देहधर्माणां युज्यते नात्र संशयः ॥ १९ ॥

## अन्योन्या-ध्यास

अत्रेदमपि बोद्धव्यमध्यासं ज्ञातुमिच्छता ।
[illegible] [illegible]ध्यासो यदा तत्र प्रजायते ॥ २० ॥
तदैव शुक्तिधर्मस्य चेदन्त्वस्य सुनिश्चितम् ।
तादृशेऽध्यस्तरजतेऽप्यध्यासः सम्प्रजायते ॥ २१ ॥

इदं रजतमित्यादि-प्रतीति रत एव हि।
जायते नात्र सन्देह-लेशसम्भावनाऽपि च ॥ २२ ॥
तथैवात्रापि पूर्वोक्तेस्वध्यासेषु समेष्वपि।
अध्यस्तमायादिषुचाधिष्ठानाध्यास-सम्भवः ॥ २३ ॥
एवमात्मनि मायायाः मायायाञ्चात्मनस्तथा।
जायमानो हि योऽध्यासः सोऽन्योन्याध्यास उच्यते ॥२४॥
अयमेवान्योन्याध्यासो ग्रन्थिरित्युच्यते बुधैः।
यथा रज्ज्वोर्मिथो ग्रंन्थे दृढग्रंथिस्तथैव सः ॥ २५ ॥
एतावता निबन्धेन यथाशास्त्रं यथाश्रुतम्।
अध्यासस्य प्रकारोऽयमत्र सम्यग् विवेचितः ॥ २६ ॥

इति दर्शन सिद्धान्त मञ्जूषायामध्यासविचारो
नाम द्वादशोऽध्यायः

---

## विशुद्धाचित् निष्कामकर्म साफल्यञ्च

वस्तुतः शुद्धरूपो हि चिदात्मा वर्ततेतराम्।
अध्यासपरम्परायामप्यशुद्धो न जायते ॥ १ ॥
यतोऽध्यासाऽधिष्ठानस्या रोपितेन च वस्तुना।
सार्धं नैव हि संस्पर्शो वस्तुतः जायते क्वचित् ॥ २ ॥
यथोषरवती भूमिः मृगतृड्जलवाहिनीम्।
सरितं नोद्वहत्येव तथोषरभुवं नदी ॥ ३ ॥
मृगवारिसमापूर्णा स्पृशति नो कदाचन।
तथाऽयमात्माऽध्यस्तेन स्पृश्यते न च वस्तुना ॥ ४ ॥

एवञ्चानादिनातेन सम्बन्धेन चिदात्मनि ।
सम्बद्धायां हि मायायां चिदात्मा लक्ष्यतेतराम् ॥ ५ ॥
सूक्ष्मत्वाच्चतदन्तोऽस्तु प्रविशन्निव लक्ष्यते ।
व्यापकत्वाद् बहिरपि व्याप्नुवन्नपि वर्तते ॥ ६ ॥

मायाविशिष्ट एवास्ति मायासम्बद्ध ईश्वरः ।
ईशितृत्वस्य चाभावात् केवले तु चिदात्मनि ॥ ७ ॥
मायाविशिष्टः साक्षी तु विद्यते न कथञ्चन ।
माया सम्बन्धतः किन्तु साक्षी केवल उच्यते ॥ ८ ॥

मायायास्तुजड़त्वेन तद्विशिष्टे चिदात्मनि ।
ईशितृत्वस्य चाभावात् साक्षी भवति केवलः ॥ ९ ॥
तथा च माया-सबन्धेनैवेशत्वं चिदात्मनः ।
साक्षित्वमपि संसिद्धं सर्ववेदान्ति सम्मतम् ॥ १० ॥

एवंचिदात्मसम्बन्धाद् गुणवैषम्य-हेतुना ।
परिणामोन्मुखी मया जायेतनात्र संशयः ॥ ११ ॥
गुणवैषम्यतोऽनेके परिणामाः भवन्त्यहो ।
रजस्तमोभ्यां संमिश्रः कश्चित् सत्वप्रधानकः ॥ १२ ॥

शुद्धसत्वप्रधानोऽयं परिणामः समुच्यते ।
पुनारजस्तमोभ्यां हि किंचतो मिश्रणे तथा ॥ १३ ॥
सत्वप्रधान एवाऽयं परिणामस्तथाप्यसौ ।
मलिनसत्वप्रधानः किन्तु बुद्धिभिरुच्यते ॥ १४ ॥

तथाचैतद् व्यष्टिभूता अनन्ता प्रभवान्ति ये ।
सत्वप्रधानाः प्रकृतेः परिणामाश्च तादृशाः ॥ १५ ॥

राजसास्तामसाश्चापि बोद्धव्यास्तद्वदेव हि ।
अनन्ताः प्रकृते र्नूनं परिणामाः विपश्चिता ॥ १६ ॥
तत्र सत्वप्रधानेषु व्यष्टिभूतेषु सर्वतः ।
प्रकृतेः परिणामेषु चिदात्मा प्रतिबिम्बते ॥ १७ ॥
रजस्तमः प्रधानेषु शुद्धेषु मलिनेषु च ।
प्रकृतेः परिणामेषु नैव चित् प्रतिबिम्बते ॥ १८ ॥
यतोऽस्वच्छाः भवन्त्येते राजसास्तामसास्तथा ।
अतो हि प्रतिबिम्बस्य ग्रहणाऽयोग्यभावतः ॥ १६ ॥
एतानि पूर्वमुक्तानि प्रतिबिम्बान्यशेषतः ।
जीवशब्दस्य वाच्यानि प्राहुरद्वैतवादिनः ॥ २० ॥
नन्वेवं दर्पणादीनामुपाधीनां विनाशने ।
प्रतिबिम्बानि सर्वाणि नश्यन्त्येव न संशयः ॥ २१ ॥
तथैवोपाधिविलये जीवोऽपि नाशमाप्नुयात् ।
तदामोक्षः कथं तस्य भवेदिति विमृश्यताम् ॥ २२ ॥
किञ्च कस्यापि मोक्षार्थं प्रवृत्तिर्नैव सम्भवेत् ।
यतो स्वस्यविनाशार्थं न कश्चिद यततेनरः ॥ २३ ॥
इतिचेन्नैव वक्तव्यं तत्र कारणमुच्यते ।
प्रतिबिम्बाख्यकं वस्तु यच्च लोके प्रतीयते ॥ २४ ॥
नोपाधिनोत्पाद्यते तत् किन्तु भेदेन दर्श्यते ।
बिम्बमेवेति बोद्धव्यं सर्वैर्विद्वद्वरैरपि ॥ २५ ॥
तथाचोपाधिविलये भेदेनाऽप्रतिभासनात् ।
मुक्त एव स भवति नाऽत्र सन्देहसम्भवः ॥ २६ ॥

## जीवेश्वरौ

जीवश्चायमुपाधीनामनुरोधी समिष्यते ।
उपाधेः परतन्त्रत्वात्प्रतिविम्बस्य निश्चितम् ॥ २७

मायासमष्ट्यवच्छिन्न ईश्वरः परिकीर्तितः ।
व्यष्ट्यवच्छिन्न-जीवोऽपि ततो भिन्नो न वर्तते ॥ २८

ईश्वरः खलु नो पाधेरनुरोधी कथञ्चन ।
प्रत्युतोपाधिरेवैनमनुगच्छति सर्वदा ॥ २६ ॥

उपाधीनां नियमनादतएव समुच्यते ।
तद्वशानाञ्च जीवानामीश्वरो लोकपूजितः ॥ ३० ॥

ईशते जीव एकोऽसौ चरात्मानामियं श्रुतिः ।
इदमीश्वरतत्त्वञ्च प्रबोधयति सर्वदा ॥ ३१ ॥

अयञ्चोपाध्यवच्छिन्नः यथैवास्तितथैव सः ।
उपाधिभूतजीवेनाऽवच्छिन्नोऽपि विवर्तते ॥ ३२ ॥

यथा सूक्ष्मतरत्वेनोपाधिमन्तः प्रविश्य सः ।
व्यापकत्वाद् बहिरपि व्याप्नोति परमेश्वरः ॥ ३३ ॥

तथैव प्रतिविम्बानि जीवाख्यान्यपि सर्वतः ।
वहिरन्तश्च व्याप्नोति व्यापकत्वान्महेश्वरः ॥ ३४ ॥

तेन 'य आत्मनि तिष्ठन् आत्मनोऽन्तर' इत्यपि ।
घटकश्रुतिश्च सर्वत्र सम्यगेवोपपद्यते ॥ ३५ ॥

द्वैतिनाञ्च तथाऽन्येषां विशिष्टाऽद्वैतवादिनाम् ।
घटकश्रुतिश्च नो सम्य गुपपन्ना भविष्यति ॥ ३६ ॥

परमाणुस्वरूपाँस्तान् जीवान् ते मन्वते यतः।
तदन्तोऽतः प्रवेशो हि युज्यते नैवकर्हिचित् ॥ ३७ ॥
तथा चौपाधिको भेदो जीवात्म-परमात्मनोः।
सिध्यत्यत्र न संदेहोऽद्वैतवेदान्ति सम्मतः ॥ ३८ ॥
'आत्मा ज्ञातव्य' इत्यादि-श्रुतिभिर्यः प्रतीयते।
सोऽप्यौपाधिक एवास्ति भेदः जीवेशयोः सदा ॥ ३९ ॥
औपाधिको यो भेदोऽस्ति जीवात्मपरमात्मनोः।
कृतार्थाः द्वैतश्रुतयस्तस्यैव प्रतिपादने ॥ ४० ॥
उपाधीनां हि विलये चैक्यसद्भावहेतुना।
तत्त्वमस्यादि श्रुतयः उपपन्नाः भवन्त्यपि ॥ ४१ ॥
चित्संबन्धेन मायायाः परिणामः प्रदर्शितः।
पूर्वमेव पदार्थानां निरूपणप्रसङ्गतः ॥ ४२ ॥
भूत भौतिकमखिलं जगत् सर्वं प्रदर्शितम्।
अव्याकृतं ञ्चाऽमूर्तञ्च मूर्तञ्चापि त्रिधा मया ॥ ४३ ॥
तत्सर्वं खलु मायायाः परिणामो हि विद्यते।
माय-तत्परिणामैश्च सम्बन्धो जायते चितः ॥ ४४ ॥
जायमानः स सम्बन्धो बन्ध इत्युच्यते बुधैः।
अहमज्ञोऽस्मि देही च सोऽप्येवमनुभूयते ॥ ४५ ॥
सुखदुःखानुभूतिश्च सर्वैतन्मूलिकामता।
'नह वै सशरीरस्य' चेत्यादि श्रुति-बोधनात् ॥ ४६ ॥

## निष्कामकर्मणः साफल्यम्

प्रियाऽप्रियाभ्यां संस्पर्शः बन्धः श्रुत्या विनिश्चितः।
असंस्पर्शश्च ताभ्यां हि मोक्षोऽदि श्रुतिसम्मतः ॥ ४७ ॥

द्वैतस्य दर्शनं यावन्न प्रियाऽप्रिययोः क्वचित् ।
असंस्पर्शो भवेत्तस्मादात्मैक्य-ज्ञानमीप्सितम् ॥ ४८ ॥

आत्मैक्यरूपसंपत्तौ कर्म-तत्कार्यकाययोः ।
सम्बन्धरूप पाशस्याऽपेद्यते हि विमोचनम् ॥ ४९ ॥

अन्तरेणात्मविज्ञानं पाशमोक्षो न सम्भवेद् ।
अधिकारं बिना चात्म-विज्ञानमपि दुर्घटम् ॥ ५० ॥

अतोऽधिकार-सम्पत्यै चित्तशुद्धिरपेद्यते ।
चित्तशुद्ध्यै च निष्काम-कर्मैवापेद्यते ध्रुवम् ॥ ५१ ॥

तथा च चित्तशुद्ध्यर्थं मोक्षप्राप्ति मभीप्सता ।
निष्कामकर्माचरणं कर्तव्यं हि प्रयत्नतः ॥ ५२ ॥

चित्तशुद्धिश्च मोक्षेच्छामुत्पादयति निश्चितम् ।
अधिकारं सुसंपाद्य नाऽत्र सन्देहसम्भवः ॥ ५३ ॥

तद् द्वाराचात्म-विज्ञानं समुत्पादयतेतराम् ।
अतो हि चित्तशुद्ध्यर्थं कर्म निष्काममाचरेत् ॥ ५४ ॥

यावन्न चित्तशुद्धिः स्यात् तावन्निष्काम कर्म वै ।
अवश्यमेव कर्तव्यं जन्मसाफल्यहेतवे ॥ ५५ ॥

निष्काम-कर्मणः कार्य-विषये शास्त्रवित्तमैः ।
कल्पास्त्रयोऽवकल्प्यन्ते ज्ञातव्यास्ते प्रयत्नतः ॥ ५६ ॥

केवलं चित्तशुद्धेर्हि निष्कामं कर्मकारणम् ।
जातायां चित्तशुद्धौ च मोक्षेच्छा स्यान्निसर्गतः ॥ ५७ ॥

ततो गुरूपदेशादिनात्म विज्ञान सम्भवः ।
इत्येकः प्रथमः कल्पः शास्त्रकारैरुदाहृतः ॥ ५८ ॥

चित्ताशोधन-द्वारैव मोक्षेच्छायास्तुकारणम् ।
निष्कामं खलु कर्मैव केचिच्छास्त्रविदो विदुः ॥ ५९ ॥
मोक्षेच्छायाञ्च जातायामात्मविज्ञान-सम्भवः ।
अयं द्वितीयः कल्पोऽस्ति तृतीयोऽग्रे प्रदर्श्यते ॥ ६० ॥
निष्कामं किल कर्मैव चात्मविज्ञान-कारणम् ।
चित्तशुद्धौ मुमुक्षायां गुरूणामुपदेशतः ॥ ६१ ॥
सर्वथात्मैक्यविज्ञानोत्तरं द्वैतस्य दर्शनम् ।
नास्त्येव लेशतस्तस्मात्कर्मणोऽवसरो न हि ॥ ६२ ॥
तदानीं नापि कस्मैचित् कार्यायापेक्ष्यते हि तत् ।
अतः स्वावसराभावात् स्वयं कर्म निवर्तते ॥ ६३ ॥
विज्ञानिनो न कर्माणि त्यजन्ति स्वयमिच्छया ।
कर्मभिरेव त्यज्यन्ते ज्ञानिनो नाऽत्र संशयः ॥ ६४ ॥
श्रीमन्तः शङ्कराचार्या अद्वैतमत-पोषकाः ।
अतएव हि प्रोच्यन्ते सर्वे निष्कर्मवादिनः ॥ ६५ ॥

इति सर्वदर्शनसिद्धान्तमञ्जूषायां विशुद्धचिद्-जीवेश्वर-विवेचननिष्कामकर्म-साफल्यविचारो नाम त्रयोदशोऽध्यायः ।

## बन्धः

एतावता निबन्धेन मूलतत्वान्यशेषतः ।
प्रदर्श्य तद्विकाराश्च पदार्थाः दर्शिताः मया ॥ १ ॥
तत्रापि मूलतत्त्वस्य ज्ञानान्मोक्षः प्रजायते ।
कारज्ञानतो बन्धः जायते नाऽत्र संशयः ॥ २ ॥

तत्रापि बन्धः संसार-बन्ध एवास्ति नापरः ।
यतोऽयमेव बध्नाति सर्वान् जीवान् गतागतैः ॥ ३ ॥
मोहदुःखसुखादीनामनुभूतिर्हि जायते ।
आबालवृद्धं सर्वेषां प्राणिनां नात्र संशयः ॥ ४ ॥

पदार्था एव प्रत्येकं सन्ति तत्र सुनिश्चितम् ।
सुखदुःखमोहरूपा इति सांख्यविदो विदुः ॥ ५ ॥
पूर्वसंस्कारवशतः शुभकर्मोदये नृणाम् ।
पदार्थे विद्यमानो हि सुखरूपो गुणोस्ति यः ॥ ६ ॥
अभिभूय दुःखमोहौ स एवार्थगतो गुणः ।
प्रादुर्भवति सर्वेषां भोक्तॄणां नात्र संशयः ॥ ७ ॥

अशुभकर्मोदये च दुःखरूपो गुणस्तथा ।
इतरावभिभूयैव प्रादुर्भवति तत्क्षणम् ॥ ८ ॥
कर्मणोऽनुदयेऽप्येवमशुभस्य शुभस्य च ।
प्रादुर्भवति मोहश्चावशिष्टावभिभूय वै ॥ ९ ॥

सुखदुःखमोहरूपाः पदार्था नैव सन्ति वै ।
प्रयोजकाः सुखादीनां किन्तु वेदान्तिनां नये ॥ १० ॥
सुखादयश्च मनसो वृत्तिभेदाः न चापरे ।
इति वेदान्तशास्त्रेषु दर्शितं शास्त्रकोविदैः ॥ ११ ॥

ते च वृत्तिविशेषाः हि पूर्वसंस्कारयोगतः ।
तत्तत्पदार्थविज्ञानात् प्रादुःसन्ति तथा तथा ॥ १२ ॥
बन्धस्य साधनीभूतं यदर्थं ज्ञानमिष्यते ।
प्रमाणं वाऽप्रमाणं वा तद्बन्धायोपयुज्यते ॥ १३ ॥

मोक्षस्य साधनीभूतं यत्तत्त्वज्ञानमिष्यते ।
तत्प्रमाणं स्वदेवास्ति मोक्षस्य साधनं ध्रुवम ॥ १४ ॥

इतिबन्धविचारोनाम चतुर्दशोऽध्यायः ।

## तत्त्वज्ञानान्मोक्षसाधनप्रकारः

कया च विधया तत्त्व-ज्ञानं मोक्षस्य साधनम् ।
भवतीत्युच्यते ह्यत्र सर्वं वेदान्तवर्त्मना ॥ १ ॥
बन्धप्रतिद्वन्द्विभूतो मोक्षोऽस्ति नात्र संशयः ।
चेतनस्याऽचेतनेन सम्बन्धो बन्ध इष्यते ॥ २ ॥
यद्यप्यचेतनं वस्तु भूतभौतिक भेदतः ।
अस्त्यसंख्यं तथाप्यत्र किञ्चिदेव प्रदर्श्यते ॥ ३ ॥
शरीरिणः शरीरेण साक्षात्संबन्ध इष्यते ।
तद्भिन्नेन च देहस्य द्वारा संबन्ध उच्यते ॥ ४ ॥
मुख्यो देहेन सम्बन्धो गौणस्तदितरेण तु ।
तथा च मुख्यसम्बन्धे नष्टे गौणोऽपि नश्यति ॥ ५ ॥
यथा हस्तिनि विक्रीते विवादो नाङ्कुशे क्वचित् ।
तथा शरीरसम्बन्धे नष्टे गौणे न हि स्पृहा ॥ ६ ॥
एवं चेतनजीवस्य देहेनाऽचेतनेन हि ।
सम्बन्धो योऽस्ति फलितः मुख्यो बन्धः स एव हि ॥ ७ ॥
मोक्षेच्छुना तथा चात्र यतनीय महर्निशम् ।
सम्बन्धरूपपाशस्य विनाशार्थं प्रयत्नतः ॥ ८ ॥
सम्बन्धस्य विनाशश्च तदानीं सुकरो भवेत् ।
यदा कदाऽयं संबन्ध केन सम्पादितोऽभवत् ॥ ९ ॥

कीदृशश्च कथं वाऽभूत् इति सर्वं सुनिश्चितम् ।
विज्ञातं प्रभवेन्नून मन्योपायो न विद्यते ॥ १० ॥

गत्यन्तरस्याऽभावेन संबन्धस्यत्वनादिता ।
सर्वैरेवाभ्युपेताऽस्ति न केनापि कृतोऽस्ति सः ॥ ११ ॥

अतः कदाभूत् कश्चास्य कर्तास्तीति विचारणा ।
निष्फलैव यतोऽनादिः सम्बन्धः स्वीकृतः सर्वैः ॥ १२ ॥

अनादित्वात् प्रवाहेण विद्यमानस्य तस्य च ।
कोऽस्ति रक्षक इत्येवं विचारो युज्यतेतराम् ॥ १३ ॥

रक्षिताऽमुक एवास्ति विशिष्यैवं न विद्यते ।
ज्ञानं तथापि कश्चित्तु रक्षिताऽवश्यमस्तिवै ॥ १४ ॥

सम्बन्धस्याऽस्य यः कश्चित् रक्षिता वर्ततेतराम् ।
स एवेश्वर विष्णवादि-शब्दैर्लोकेऽभिधीयते ॥ १५ ॥

सम्बन्धः कीदृशश्चायं विचारेऽस्मिन् समुत्थिते ।
द्वयोश्चिदचितोर्मूल-तत्त्वज्ञानमपेक्ष्यते ॥ १६ ॥

मूलतत्त्वाऽनुसंधानमन्तरेण न शक्यते ।
याथातथ्येन सम्बन्ध ज्ञानं निश्चेतुमञ्जसा ॥ १७ ॥

तथा च येन सम्बन्धो रक्षितस्तस्य धीयते ।
भवेत्तदैव सम्बन्ध-विच्छेदोपाय-सम्भवः ॥ १८ ॥

तथा च मूलतत्त्वस्य ज्ञानं मोक्षोपयोगिना ।
आवश्यक मतोऽन्वेष्यं मूलतत्त्वं विपश्चिता ॥ १९ ॥

सर्वाऽनर्थमयस्यास्य जगतो मूलकारणम् ।
अविद्यैवास्त्यतस्तस्याः स्वरूपं परिलक्ष्यते ॥ २० ॥

## अविद्या

पदार्थ एक एवास्ति श्रीमच्छाङ्करदर्शने ।
परमार्थः सत्स्वरूपः सैव ब्रह्माऽपि नापरः ॥ २१ ॥
स एव चात्मरूपोऽस्ति दृक् स्वरूपोपि विद्यते ।
दृगेव ज्ञानशब्देन चिच्छब्देनच प्रोच्यते ॥ २२ ॥
ईदृशस्तादृश इति वक्तुं नैव सशक्यते ।
अतो हि निर्विशेषोऽस्ति निर्लेपश्चाप्यसंशयम् ॥ २३ ॥
अचिन्त्यत्वाच्च मनसो गोचरो नैव विद्यते ।
तस्यैव चात्मनः शक्तिरविद्येति निगद्यते ॥ २४ ॥
मायादिशब्द वाच्येय मविद्यैवास्ति नापरा ।
त्रिगुणात्मक जगतः इयमेवादि-कारणम् ॥ २५ ॥
पारमर्थिक-सत्यत्वाभावेनासत्स्वरूपिका ।
व्यावहारिक सत्यत्वात् सतीचेयं निगद्यते ॥ २६ ॥
चिता सहास्याः सम्बन्धः त्रिविधः परिकीर्तितः ।
अग्रे प्रदर्श्यते सोऽपि जिज्ञासुज्ञानहेतवे ॥ २७ ॥
यथाकाशं हि लोष्ट्रादीन् अन्ततश्च वहिश्च तत् ।
सर्वान् व्याप्नोत्यविद्यायां तथाचिदपि सर्वतः ॥ २८ ॥
चितो व्याप्तावविद्यायां तत्कार्ये भ्वादि मण्डले ।
मूर्तेऽमूर्ते च बुद्धयादौ तद् व्याप्तिरिष्यतेतराम् ॥ २९ ॥
इयमेका विधा प्रोक्ता द्वितीया प्रोच्यते यथा ।
स्फटिकं स्वच्छभावेन स्वसमीपस्थ-वस्तुनः ॥ ३० ॥
रक्तिमानं हि गृह्णाति तथाऽविद्यापि चान्ततः ।
गुणानां बीज भूतापि स्वच्छैवास्ति स्वभावतः ॥ ३१ ॥

अतो विद्या स्वच्छरूपा चित्तं गृह्णाति सर्वतः ।
अयमेव चिदाभासः प्रोच्यते शास्त्रकोविदैः ॥ ३२ ॥

द्वितीयेयं विधा प्रोक्ता तृतीयामपि दर्शये ।
यथा हि दर्पणः स्वच्छः पुरोवस्थित वस्तुनः ॥ ३३ ॥

मुखादेः प्रतिविम्बं हि परिगृह्णाति सर्वतः ।
गृह्णातीयमविद्यापि प्रतिविम्बं चि तस्तथा ॥ ३४ ॥

प्रतिविम्बितायाश्चितः चिदाभासपदेन च ।
दृश्यते व्यवहारोऽपि तृतीयेयं विधा स्मृता ॥ ३५ ॥

यथासमष्ट्यविद्यायां चिद्व्याप्तिरिष्यतेतराम् ।
तथैव व्यष्ट्यविद्यायां प्रथमेन प्रकारतः ॥ ३६ ॥

तत्कार्येष्वपि मूर्तेषु चामूर्तेष्वपि भ्वादिषु ।
बुद्ध्यादिषुच सर्वत्र चिद्व्याप्ति रिष्यतेतराम् ॥ ३७ ॥

मृत्समूहे च तत्खण्डे तत्कार्येषु घटादिषु ।
यथाकाशस्य सर्वत्र व्याप्तिस्तद्वच्चितो मता ॥ ३८ ॥

द्वितीयेन तृतीयेन प्रकारेण तु जायते ।
यः सम्बन्धश्चितः सोऽस्ति स्वच्छ एव हि वस्तुनि ॥ ३९ ॥

स्फटिकं त्वेव गृह्णाति समीपस्थस्य वस्तुनः ।
रक्तिमादिकमाभासं नाऽस्वच्छा लोष्ट्रकादयः ॥ ४० ॥

प्रतिविम्बञ्च गृह्णाति तथा स्वच्छो हि दर्पणः ।
नास्वच्छा लोष्ट्र कुड्यादिरितिवस्तुव्यवस्थितिः ॥ ४१ ॥

प्रथमेन प्रकारेण स्वच्छे चास्वच्छके तथा ।
चितो व्याप्तिस्तु सर्वत्रा काशस्येवतु युज्यते ॥ ४२ ॥

द्वितीयेन तृतीयेन प्रकारेणतु यः पुनः ।
चित्संबन्धेन बुद्ध्यादौ चिदाभासः प्रतीयते ॥ ४३ ॥
तादृशे च चिदाभासे प्रतिविम्बेऽथवा पुनः ।
प्रथमेन प्रकारेण चितो व्याप्तिरपीष्यते ॥ ४४ ॥
तथा च बुद्ध्यवच्छिन्ना यथा चिद्वर्ततेतराम् ।
चिदाभासावच्छिन्नापि चित्तथैव च वर्तते ॥ ४५ ॥
एवं चित्प्रतिविम्बेनाऽवच्छिन्नाचिद्विभायतः ।
तिष्ठन्नात्मनिचेत्यादि-श्रुतिर्नैव विरुध्यते ॥ ४६ ॥

इति दर्शन मञ्जूषायां तत्त्वज्ञानान्मोक्षसाधनप्रकारो
नाम पञ्चदशोऽध्यायः

## मोक्षस्वरूपे-मतभेदः

अथ मोक्षस्वरूपेऽपि मतभेदः प्रदर्श्यते ।
स्वातन्त्र्यमथवा मृत्युर्मोक्षश्चार्वाकसम्मतः ॥ १ ॥
उच्छेदश्चात्मनो मोक्षः स्वीकृतः शून्यवादिभिः ।
अन्यैर्बौद्धैश्च ज्ञानस्य निर्मलस्योदयस्तथा ॥ २ ॥
कर्मोद्भूतदेहरूपाऽऽवरणस्य विनाशने ।
सततञ्चोर्ध्वगमनं जैनानां जीवमुक्तता ॥ ३ ॥
सर्वज्ञत्वादिभगवद्गुणानां प्राप्तिरेव च ।
सर्वकर्तृत्वभिन्नानां मोक्षः रामानुजैर्मतः ॥ ४ ॥
याथातथ्येन भगवत्स्वरूपाऽनुभवस्तथा ।
मोक्ष इत्युच्यते श्रीमद् रामानुजमहोदयैः ॥ ५ ॥
माध्वैः पूर्णं सुखं मोक्षः दुःखामिश्रं निरुच्यते ।

श्रीवत्सप्राप्तिरहितं जगत्कर्तृत्ववर्जितम् ॥ ६ ॥

परमैश्वर्य्यप्राप्तिश्च मोक्षः पाशुपतैर्मतः।

पूर्णात्मतायाः लाभश्च प्रत्यभिज्ञासमर्थकैः ॥ ७ ॥

पारदादि रसेनैव देहस्थैर्ये सुनिश्चिते।

जीवन्मुक्तिश्च मोक्षोऽस्ति श्रीरसेश्वरदर्शने ॥ ८ ॥

अशेषस्य विशेषस्य गुणस्योच्छेद एव हि।

वैशेषिकाणां सर्वेषां मते मोक्ष उदीरितः ॥ ६ ॥

निश्शेषाणाञ्च दुःखानां या निवृत्तिर्निरागमा।

समोक्षोऽभिहितः सर्वैर्न्यायशास्त्रविशारदैः ॥ १० ॥

मोक्षे दुःखनिवृत्तिर्नो केवला किन्तु तत्र वै।

सुखानुभूतिरप्यस्ति केषाञ्चिदेकदेशिनाम् ॥ ११ ॥

मीमांसकमते मोक्षः स्वर्ग एवास्ति नापरः।

'यन्न दुःखेन संभिन्न' मित्यादि श्रुति-बोधितः ॥ १२ ॥

आधारचक्र संस्था या ब्रह्मरूपा सनातनी।

परावाग् दर्शनं तस्याः मोक्षः पाणिनिसम्मतः ॥ १३ ॥

प्रकृत्युपरमे पुंसः स्वरूपेण ह्यवस्थितिः।

मोक्ष इत्युच्यते सर्वैः सांख्यशास्त्र प्रवर्तकैः ॥ १४ ॥

सत्वादीनां पुमर्थानां कृतकर्तव्यभावतः।

स्वमूलेऽत्यन्त-विलयः प्रकृतेर्मोक्ष उच्यते ॥ [illegible]५ ॥

निरुपाधिकरूपेणाऽवस्थानं मोक्ष उच्यते।

चितिशक्तेरिति प्रोक्तं सर्वैः पातञ्जला[illegible] ६ ॥

मूलाऽज्ञानस्य सन्नाशे स्वरूपा[illegible]था।

मोक्षोऽस्त्यद्वैतवेदान्त-सिद्धान्तै[illegible]तः ॥ १७ ॥

एवं दर्शनभेदेन सर्वशास्त्रानुसारतः ।
मोक्षस्वरूपं जिज्ञासूपकाराय प्रदर्शितम् ॥ १८ ॥

इति मोक्षस्वरूपे मतभेद प्रदर्शनं नाम षोडशोऽध्यायः ॥

## मोक्षः मोक्षेनिरतिशयसुखानवगमश्च

आत्यन्तिक-सुखास्तित्वं विद्यते वा न विद्यते ।
दुःखस्यापि तथाऽत्यन्त-निवृत्तिरिष्यते न वा ? ॥ १ ॥
एवं प्रश्ने समुद्भूते पूर्वपक्षोऽत्र दृश्यते ।
उत्तरञ्च तथा वक्ष्ये श्रुतिशास्त्रानुसारतः ॥ २ ॥
आत्यन्तिकसुखस्याऽत्रावगमो नैव दृश्यते ।
अतोऽनवगमाद्धेतोस्तस्यास्तित्वं न विद्यते ॥ ३ ॥
शब्दस्पर्शादि-विषय-सम्बन्धादुद्गतानि च ।
सुखादि नाना रूपाणि प्रसिद्धान्येव सर्वतः ॥ ४ ॥
किन्तु तेष्वपि चरमावधिर्नैवावलोक्यते ।
अत आत्यन्तिकत्वं नो सुखस्यालोक्यते क्वचित् ॥ ५ ॥
लोकेऽनुभूयमानेषु वैषयिक-सुखेष्वपि ।
ज्यायस्त्वं विद्यते कस्य निश्चेतुं नैव शक्यते ॥ ६ ॥
कश्चिन्मधुरशब्दस्य श्रवणेष्वेव सज्जते ।
कश्चित्सुखकरस्पर्शञ्चाधिकं मन्यतेतराम् ॥ ७ ॥
सौन्दर्यालोकने कश्चिन्मुग्धो भवति सर्वतः ।
कश्चित् सुगन्धमाघ्रातुं दत्तचित्तो दिवानिशम् ॥ ८ ॥
मधुरादिरसास्वादे लम्पटः कोऽपि दृश्यते ।
एवं भिन्नरुचिर्लोकः सर्वैरेवावलोक्यते ॥ ९ ॥

तथा च किं सुखं कस्मात्सुखाज्ज्यायः समिष्यते ।
इत्येवं निर्णयं कर्तुं न कश्चिन् पारयेद् बुधः ॥ १० ॥

तस्मात्सुखविशेषस्य शब्दस्पर्शाद्यपेक्षया ।
ज्यायस्त्वं विद्यते नैव भिन्नत्वाद्धि रुचेर्नृणाम् ॥ ११ ॥

यतः सुखविशेषस्य ज्यायस्त्वञ्च जघन्यता ।
भोक्तृतन्त्रे प्रभवतः रुचेर्भिन्नत्व हेतुना ॥ १२ ॥

अनन्तत्वाच्च भोक्तृणां वैचित्र्याच्चापि तद्रुचेः ।
कश्चित्सुखविशेषो हि कस्मायेवापरायते ॥ १३ ॥

एवं सुखविशेषस्याऽसुकस्यैव न दृश्यते
सर्वांशेन हि ज्यायस्त्वं दृष्टेष्वेव सुखेषु चेत् ॥ १४ ॥

तदाऽदृष्टार्थ विषये चेदमेव सुखं महत् ।
सर्वांशेनेति विदुषा निश्चेतव्यं कथं भवेत् ॥ १५ ॥

एवं दुःख निवृत्त्यर्थं सर्वा एव हि प्राणिनः ।
प्रवर्तमाना दृश्यन्ते स्वे स्वे कर्मणि सर्वदा ॥ १६ ।

एषैव किन्तु दुःखस्य निवृत्तिर्ज्यायसी मता ।
सर्वतोऽपीति निश्चेतुं न केनापीह शक्यते ॥ १७ ॥

वर्तमानस्य दुःखस्य निवृत्तिर्भाविनस्तथा ।
द्विधा दुःखनिवृत्तिस्तु सर्वशास्त्रेषु वर्णिता ॥ १८ ॥

तत्रापि वर्तमानस्य दुःखस्यापेक्षया समैः ।
भाविदुःखस्य संनाशो ज्यायान् वै मन्यते बुधैः ॥ १९ ॥

यतो हि वर्तमानस्य दुःखस्याऽपेक्षया समैः ।
भाविनः खलु दुःखस्य प्राबल्यं मन्यतेतराम् ॥ २० ॥

वर्तमानञ्च यद्दुःखं तत्सोढप्रायमिष्यते ।
न तथा लेशतोप्यस्ति सोढं दुःखमनागतम् ॥ २१ ॥
अतोह्यनागतस्यैव दुःखस्य विलयाय च ।
यत्नं कुर्वन्ति विद्वांसः वैद्याः शास्त्रेषु सम्मतम् ॥ २२ ॥
अतएव च भगवान् महाप्राज्ञः पतञ्जलिः ।
सूत्रयामास योगेऽपि 'हेयं दुःखमनागतम्' ॥ २३ ॥
अतीतं किल यद्दुःखमुपभोगेन तद्गतम् ।
वर्तमानञ्च स्वास्तित्व-क्षण एवोपभुज्यते ॥ २४ ॥
अतस्तयो र्निवृत्तिस्तु कथञ्चिन्नैवयुज्यते ।
तस्मादनागतं दुःखं हेयमुक्तं महर्षिणा ॥ २५ ॥
अतोह्यनागतस्यैव दुःखस्योच्छेदनाय वै ।
शास्त्रानुसारं कुर्वीत यत्नं बुधवरो जनः ॥ २६ ॥
अत्राप्याशङ्कते कश्चिच्छृणुतत्सावधानतः ।
श्रुत्वा मत्वा समाधेयं विद्वद्भिः संयतात्मभिः ॥ २७ ॥
अनागतस्य दुःखस्याऽनुत्पन्नत्वेन हेतुना ।
अस्तित्वमेव नास्तीति निवृत्तिस्तस्य कीदृशी ? ॥ २८ ॥
नाऽनुत्पन्नस्य शत्रोस्तु वधार्थं बुद्धिमान्नरः ।
समुत्क्षिपत्यनुन्मत्तः शस्त्रं कश्चित् कदाचन ॥ २९ ॥
अतोऽसमञ्जसं चैतदिहचेद् वर्ततेतराम् ।
ततोऽत्रापि समाधानमिदमस्ति विपश्चिताम् ॥ ३० ॥
यद्यप्यनागतं दुःखमनुत्पन्नं हि वर्तते ।
तथापि तत्कारणस्यत्वस्तितावर्ततेतराम् ॥ ३१ ॥

कारणस्यास्य या शक्तिस्तत्कार्योत्पादनात्मिका ।
तस्याः कर्तुं समुच्छेदः साधनेन सुशक्यते ॥ ३२ ॥

तस्याः शक्तेः समुच्छेदे दुःखस्यानागतस्य वै ।
उत्पत्तिरेव भवितुं न शक्नोति कदाचन ॥ ३३ ॥

इयमेवात्यनुत्पत्ति दुःखस्याऽनागतस्य या ।
निवृत्तिरुच्यते सैव शास्त्रतत्त्वविमर्शिभिः ॥ ३४ ॥

एवञ्च किञ्चित्कुत्रापि वर्तते नासमञ्जसम् ।
तथा च दुःखस्यात्यन्त-निवृत्त्यवगमः स्फुटः ॥ ३५ ॥

यदपेक्ष्य सुखं किञ्चिदधिकं नैव वर्तते ।
तच्च नो निरतिशय सुखं काऽप्युपलभ्यते ॥ ३६ ॥

दुःखस्यापि निवृत्तिस्तु तादृशी नोपलभ्यते ।
इत्युक्तञ्च मया पूर्वं दत्र किञ्चिद्विचार्य्यते ॥ ३७ ॥

तादृशी दुःखनिवृत्तिः सुखञ्चापि तथाविधम् ।
न विद्यते यतस्तस्याऽस्तित्वे मानं न वर्तते ॥ ३८ ॥

प्रत्युताऽनुपलब्धेश्च नास्त्येवेति विनिश्चितम् ।
यदि स्यादुपलभ्येत तर्कोऽप्यत्र निदर्श्यते ॥ ३९ ॥

दृष्टं यद्यत् सुखं किञ्चित् सर्वं सातिशयं हि तत् ।
तद्दृष्टान्तबलेनैवाऽदृष्टञ्चापि सुखं तथा ॥ ४० ॥

तेन दृष्ट-समं सर्वमदृष्टमपि यत्सुखम् ।
तस्य सातिशयत्वं हि सुतरामेव सिध्यति ॥ ४१ ॥

एवं वन्निरतिशयं सुखं नैवाऽत्रसिध्यति ।
इत्यस्यापि समाधानं पूर्वं शास्त्रेषु दर्शितम् ॥ ४२ ॥

## आत्यन्तिक सुखास्तित्वम्

आत्यन्तिकसुखाभावोऽनुपलब्ध्या यया त्वया ।
साध्यते सा तवैवास्ति सम्मताऽथ समस्य वा ॥ ४३ ॥
आद्ये च दर्शितो हेतुरप्रयोजक एव वै ।
यतो न सर्वे जानन्ति सर्वं वस्तु व्यवस्थितम् ॥ ४४ ॥
अदृष्टानां त्वया सर्व-पदार्थानाञ्च सर्वथा ।
असत्वापाततोऽप्याद्यः पक्षो नैवात्र युज्यते ॥ ४५ ॥
सुखमात्यन्तिकं सर्वैर्ज्ञायते नैव कर्हिचित् ।
अयं द्वितीयः पक्षोऽपि नैव वक्तुं सुशक्यते ॥ ४६ ॥
यतः केनापि न ज्ञातं तादृशं सुखमित्यहो ।
इत्येवं निश्चयस्तत्र त्वया सम्पाद्यते कथम् ? ॥ ४७ ॥
यतो नान्यस्य संवित्तिरन्यैर्विज्ञायते क्वचित् ।
सुखमात्यन्तिकं तस्मान्नास्तीत्युक्तिरसङ्गता ॥ ४८ ॥
किञ्चात्रलोके सर्वेऽपि प्राणिनः सन्त्यनीश्वराः ।
तद् दृष्टान्तेन नो कैश्चित् सर्वेशो नैव मन्यते ॥ ४९ ॥
किन्तु दृष्टान्तसत्वेऽपि सर्वेशो मन्यते यथा ।
सुखमात्यन्तिकं तस्मान्मन्तव्यं शास्त्रसम्मतम् ॥ ५० ॥
सर्वेशो नाभिमन्येत यदि दृष्टान्तदर्शनात् ।
ईश्वरोऽपि तदा नूनमीशितव्यो भविष्यति ॥ ५१ ॥
तदा तस्य नियन्ताऽपि कश्चिदन्यो भविष्यति ।
पुनश्च तस्याप्यन्यः स्यान्नियन्तेत्यनवस्थितिः ॥ ५२ ॥
आस्थीयतेऽनवस्थाचेद् बीजाङ्कुर समा त्वया ।
अगत्येति तदा ब्रूहि कीदृशीतेऽगतिर्मता ॥ ५३ ॥

प्रत्युताऽखिलविश्वेशे सर्वशक्तिनियन्तरि ।
अङ्गीकृते च वाय्वादौ तत्तद्धर्मव्यवस्थितिः ॥ ५४ ॥

अग्नेर्यदुर्ध्वज्वलनं वायोस्तिर्यग्गतिश्च या ।
जलस्यापि तथाऽधस्ताद् गमनं यद्व्यवस्थितम् ॥ ५५ ॥

तत्तु सर्वेश्वरेऽनन्ते सर्वशक्तिनियामके ।
अङ्गीकृते तु युज्येत नाऽन्यथा तद्व्यवस्थितिः ॥ ५६ ॥

तथा च दुःखस्यात्यन्तनिवृत्तिरिष्यतेतराम् ।
सुखञ्चात्यन्तिकं सिद्धं तद्वन्नास्त्यत्र संशयः ॥ ५७ ॥

दुःखस्यात्यन्त-निर्णाशः सुखमात्यन्तिकं तथा ।
शास्त्राऽनुसारं प्रादर्शि द्रष्टव्यं ज्ञातुमिच्छता ॥ ५८ ॥

इति दर्शनसिद्धान्तमञ्जूषायामात्यन्तिकदुःखनिवृत्त्यात्यन्तिक-सुखावाप्तिविचारो नाम सप्तदशोऽध्यायः ॥ १७ ॥

## मोक्षशब्दार्थः तत्रवादश्च

अथमोक्ष-स्वरूपेऽपि विवादो यो विपश्चिताम् ।
मोक्षशब्दस्यभावोऽपि सङ्क्षेपेणेह कथ्यते ॥ १ ॥

दुःखस्यात्यन्तविलयः सुखमात्यन्तिकं तथा ।
किमेकमेवमोक्षोऽस्ति द्वयं वा मिलितं तथा ॥ २ ॥

तत्राप्यात्यन्तिकी दुःख निवृत्तिर्मोक्ष उच्यते ।
सुखं वाऽत्यन्तिकं मोक्षः इतिशङ्कासमुत्थितौ ॥ ३ ॥

आत्यन्तिकं सुखं यच्च न मोक्षः केवलं हि तत् ।
दुःखस्य लेशतोऽस्तित्वे सुखं नात्यन्तिकं यतः ॥ ४ ॥

यत् सुखं निरतिशयं तदात्यन्तिकमुच्यते ।
दुःखसंस्पर्शसत्त्वे च कथं निरतिशयं हि तत् ॥ ५ ॥
यत्रेतरसुखापेक्षमधिकं दृश्यते सुखम् ।
लेशतो दुःखसत्त्वेऽपि तत्राप्यात्यन्तिकं सुखम् ॥ ६ ॥
लेशतो विद्यमानं यद्दुःखं कामदिन्यूनताम् ।
सुखस्वरूपे नैवात्र सम्पादयति कर्हिचित् ॥ ७ ॥
सुखसंवेदने किन्तु न्यूनताऽल्पैव जायते ।
तेनाऽल्पदुःखसत्त्वेऽपि सुखमात्यन्तिकं मतम् ॥ ८ ॥
इतिचेन्मोक्षशब्दस्य भावार्थो नैव युज्यते ।
यतो हि सर्वदुःखेभ्यो मुक्तता मोक्ष उच्यते ॥ ९ ॥
दुःखलेशस्य सत्वे च कथं दुःखाद् विमुक्तता ।
अतो न केवलं तद्धि सुखं मोक्षः समुच्यते ॥ १० ॥
सन्नप्यनस्तिकल्पो यो दुःखलेशः प्रतीयते ।
दुःखत्वेन च नो भाति तदप्यात्यन्तिकं सुखम् ॥ ११ ॥
सुखव्यूहेऽल्पदुःखस्याऽप्रतिभासेन हेतुना ।
केवलं सुखरूपस्य मोक्षता चेत् समुच्यते ॥ १२ ॥
तदा कथञ्चिन्मोक्षार्थ उपपन्नो भवेदपि ।
परन्त्वेतादृशो मोक्षः सम्भवेद् भेदवादिनाम् ॥ १३ ॥
आत्मैक्यवादिनान्त्वेतन्मतं नैवोपयुज्यते ।
भासमानात्म-भेदस्यौपाधिकत्व-विनिश्चयात् ॥ १४ ॥
मोक्षे चौपाधिको भेदः सुतरामेव नश्यति ।
तदानीमात्मनः सर्व-नियन्तुरीश्वरस्य च ॥ १५ ॥

पूर्णस्वातन्त्र्य-लाभेन दुःखलेशो न विद्यते ।
तदात्यन्तिकदुःखस्य निवृत्तेरपिसम्भवात् ॥ १६ ॥

आत्यन्तिकं सुखं नैव केवलं मोक्ष इष्यते ।
आत्मैक्य-वादिनां किन्तु भेदवादिभिराद्दवः ॥ १७ ॥

आत्यन्तिकं सुखं मोक्षो विद्वद्भिर्मन्यते तु यैः ।
तेषां चिज्जडयोर्भेदोऽवश्यमन्तव्य इष्यते ॥ १८ ॥

अभेदे च सुखोत्पत्तेर्मोक्षकाले न सम्भवः ।
आरोपितत्व-स्वीकारादवश्यं जडवस्तुनः ॥ १६ ॥

आरोपितञ्च यद्वस्तु मोक्षे तन्नोपलभ्यते ।
एवञ्चैतन्मते तत्र सुखं नात्यन्तिकं भवेत् ॥ २० ॥

एवं जडात्मनो भेदमात्मनाञ्चपरस्परम् ।
मन्यन्ते ये नते तेषां मोक्ष अत्यन्तिकं सुखम् ॥ २१ ॥

ये चात्माऽनात्मनोर्भेदमभेदञ्चात्मनां मिथः ।
मन्यन्ते तन्मते मोक्षः केवलं न सुखं मतम् ॥ २२ ॥

दुःखस्यात्यन्तविलयः सुखमात्यन्तिकं तथा ।
मिलितं मोक्ष इत्याहुः प्रत्यभिज्ञामतानुगाः ॥ २३ ॥

यस्यास्ति पूर्णं स्वातन्त्र्यं परमेशस्य ब्रह्मणः ।
तस्यैवाऽत्यन्तिकी दुःख-निवृतिरिष्यते बुधैः ॥ २४ ॥

## आत्यन्तिक दुःखनिवृत्युपपादनम्

पारतन्त्र्यं हि दुःखस्य बीजं सर्वैः समीरितम् ।
परतन्त्रस्य नो दुःखं लेशतोऽपीति दुर्वचम् ॥ २५ ॥

एवं जडात्मनोर्भेदमभेदञ्चात्मनां मिथः।
मन्यन्ते सुधियो ये वै प्रत्यभिज्ञामतानुगाः ॥ ३७ ॥
पक्षौ हि तन्मते सम्यगाञ्जस्येनोपपद्यते।
सुखं दुःखनिवृत्तिश्च मिलितं मोक्ष इत्यसौ ॥ ३८ ॥

## मोक्षस्वरूपे श्रुतिसम्मतिः

पूर्वोक्तं मोक्षरूपं यच्छ्रुतेर्नाभिमतं हि तत्।
यतः प्रियाऽप्रियस्पर्शाभावं मोक्षे ब्रवीत्यसौ ॥ [illegible] ॥
अशरीरे वा वसन्तं स्पृशतो न प्रियाऽप्रिये।
इयं श्रुतिः प्रियस्पर्शं निषेधत्यप्रियं यथा ॥ ४० ॥
प्रियस्पर्शनिषेधेन सुखाभावोऽत्र गम्यते।
दुःखस्य विरहो मोक्षेऽप्रियस्पर्शनिषेधतः ॥ ४१ ॥
तथा च मोक्षावस्थायां केवलात्यन्तिकी च या।
दुःखस्य निर्वृतिः सैव मोक्षः श्रुत्याऽभिमन्यते ॥ ४२ ॥
मोक्षे च लेशतो दुःखं सुखं वा नानुभूयते।
इत्येव श्रुतितात्पर्यं निर्णीतं शा[illegible] ॥ ४३ ॥
एतादृशी च मोक्षस्य यावस्था श्रुति[illegible]।
सा प्रकारद्वयेनैव युज्यते नान्यथा ततः ॥ ४४ ॥
मुक्तात्मानो जडाः सर्वे यथा न्यायमते हि ते।
स्वाभाविकमभोक्तृत्वमात्मनो मन्यतेऽथवा ॥ ४५ ॥
मुक्तात्मनां जडत्वं चेन्मन्यते न्यायकोविदैः।
तदा दुःखान्निवृत्ति हिं तेषां वक्तुं न शक्यते ॥ ४६ ॥

दुःखस्य सम्भवे दुःखान्निवृत्तिः प्रोच्यते बुधैः ।
नहि दुःखान्निवृत्तोऽसौ पाषाण इति भण्यते ॥ ४७ ॥

अत्र नैयायिका आहुः नैवं वक्तुं हि युज्यते ।
नहि पाषाणवज्जीवाः सर्वदाऽचेतना मताः ॥ ४८ ॥

प्राङ्मोक्षाच्चेतना जीवाः मोक्ष एव जडा हि ते ।
यतो ज्ञानं हि चैतन्यं ज्ञानिनश्चेतना मताः ॥ ४९ ॥

अवस्थायाञ्च बद्धायां ज्ञानसत्वेन हेतुना ।
भागिनः सुखदुःखानां भवन्त्येव न संशयः ॥ ५० ॥

मोक्षे च सर्वज्ञानानां सर्वथोच्छेदसम्भवात् ।
लेशतोऽपि सुखं दुःखं तदानीं नैव युज्यते ॥ ५१ ॥

एवमात्यन्तिकी दुःख-निवृत्तिरत्रयुज्यते ।
तथाप्येतादृशी मोक्षाऽवस्था न श्रुति-सम्मता ॥ ५२ ॥

मोक्षे यद्दर्शनादीनामभावं वदति श्रुतिः ।
सर्वात्मैक्यदृष्टिमूलं न जडत्वान् कथञ्चन ॥ ५३ ॥

तथा चात्यन्तिकी दुःखनिवृत्तिर्या समिष्यते ।
सा स्वाभाविक भोक्तृत्वाऽभाव एवोपपद्यते ॥ ५४ ॥

स्वाभाविकमभोक्तृत्वमात्मनः श्रुतिसम्मतम् ।
अङ्गीकृतं चेत् कस्याऽपि मते दोषो न जायते ॥ ५५ ॥

आत्मैक्यमात्मनानात्वं वाऽस्तु भेदो जडात्मनोः ।
अभेदो वाऽस्तु नो कश्चिद् विशेषः परिलक्ष्यते ॥ ५६ ॥

लेशतोऽपि सुखं दुःखमभोक्तृत्वान्न जायते ।
अत्यन्तदुःखनिर्णाशो मोक्षे तेनैव सिध्यति ॥ ५७ ॥

एवं प्रकारभेदेन मोक्षरूपं प्रदर्शितम् ।
मोक्षसाधनविषये किञ्चिदग्रे प्रदर्श्यते ॥ ५८ ॥

इति दर्शनसिद्धान्तमञ्जूषायां मोक्षस्वरूपविचारोनाम
अष्टादशोऽध्यायः

## मोक्षसाधनम्

प्रदर्शितेषु सर्वेषु मोक्षरूपेषु सर्वथा ।
दुःखस्यात्यन्तविलयः सर्वैरेवाभिमन्यते ॥ १ ॥
तत्र दुःखप्रहाणार्थं यतमाना अहर्निशम् ।
दृश्यन्ते सुखिनोऽप्यत्र लोके नास्तीह संशयः ॥ २ ॥
तत्र सोढुमशक्यत्वे दुःखस्यौषधसेवनात् ।
दुःखसंवेदनं केचित् प्रतिबध्नन्ति निश्चितम् ॥ ३ ॥
दुःखसाधनमन्विष्य तत्परीहारहेतवे ।
उपायश्चिन्त्यते प्राज्ञैः सर्वथा रोगशान्तये ॥ ४ ॥
दुःखसंवेदने तावत् प्रतिबद्धेऽपि भेषजैः ।
सर्वथा दुःखनिर्णाशो जायते नैव कर्हिचित् ॥ ५ ॥
अतएव हि दुःखानां साधनीभूतवस्तुनः ।
क्रियते परिहारोऽत्र सर्वथा दुःखशान्तये ॥ ६ ॥
यावच्च दुःखजनकं ज्ञायते नैव साधनम् ।
तावत्तत्परिहारोऽपि न कर्तुं शक्यते बुधैः ॥ ७ ॥
अतो मुमुक्षुभिर्नूनं दुःखसाधनवस्तुनः ।
ज्ञानाय यत्नः कर्तव्यः प्रहाणाय च सर्वतः ॥ ८ ॥

लोकेऽनुभूयमानानि नानारूपाणि प्राणिभिः ।
दुःखानि तानि सर्वाणि हातव्यानि मुमुक्षुभिः ॥ ९ ॥
सम्बन्धाज्जायते दुःखमप्रियस्य च वस्तुनः ।
तस्मिन् परिहृते चान्यच्छिष्यते दुःखसाधनम् ॥१०॥
नानाविधानां दुःखानां यद्यद्वस्त्वस्ति साधनम् ।
तत्सर्वं परिहर्तव्यमतएव हि कारणात् । ॥ ११ ॥
तत्र चैकविधस्याऽपि दुःखस्येदं हि कारणम् ।
इति निश्चयतो ज्ञातुं न शक्नोतीह कश्चन ॥ १२ ॥
यत एकस्य कस्याऽपि दुःखसाधनमस्ति यत् ।
तदेवान्यस्य कस्याऽपि सुखसाधनमिष्यते ॥ १३ ॥
तथैकदा यदेकस्य दुःखसाधनमिष्यते ।
देशकालान्तरे तस्य तदेव सुखसाधनम् ॥ १४ ॥
तथा च भिन्नभिन्नानां दुःखानामस्ति साधनम् ।
इदमेवेति निश्चेयं सुधीभिः सूक्ष्मदृष्टिभिः ॥ १५ ॥
तत्रापीन्द्रियसम्बद्धेष्वपि भौतिकवस्तुषु ।
किञ्चित्सुखं जनयति दुःखंकिञ्चित्तथैव च ॥१६॥
सुखसाधनभूतस्य वस्तुनः किञ्च कारणम् ।
दुःखसाधनभूतस्य तथा किं कारणं मतम् ॥१७
तथातत्कारणस्यापि कारणं किं समिष्यते ।
एवं तन्मूलभूतस्य कारणस्यापि दर्शनम् ॥१८॥
एवमन्वेषणायाञ्च तयोर्हि सुखदुःखयोः ।
पृथक् पृथग् यदि भवेद् भिन्नं तन्मूलकारणम् ॥१९॥

तदैव सुखदुःखानामुत्पादकस्वरूपता ।
विज्ञेया मूलभूतस्य कारणस्यैव निश्चितम् ॥ २० ॥
यदैकमेव हि तयोः समालोच्येत कारणम् ।
सुखदुःखोत्पादकत्वं तदा तस्य न सम्भवेत् ॥ २१ ॥
किन्तु तत्कारणात्कार्योत्पादनस्य परम्परा ।
विद्यते या हि तन्मध्ये कस्मिँश्चिद्वस्तुनि स्वयम् ॥२२॥
सुखदुःखोत्पादकं हि स्वरूपं तत्र जायते ।
केनचिद् वा निमित्तेन निश्चयोऽयं भविष्यति ॥२३॥
भूतभौतिकतत्त्वानामतएव हि कारणात् ।
मूलतत्त्वान्वेषणेच्छा मुमुक्षूणां प्रजायते ॥२४॥
तथा जगति दृश्येषु सकलेष्वपि वस्तुषु ।
इदं हि दुःखजनकम् इदञ्च सुखसाधनम् ॥२५॥
एवं द्वैराश्यतस्तेषां व्यवस्था नैव दृश्यते ।
अतोऽभियुक्तै रत्रोक्तं तद्विचार्य्यं विपश्चिता ॥२६॥
वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ।
कामिनीकनकेभ्योऽपि न सुखं शान्तचेतसाम् ॥२७॥
तथा हि दुःखञ्चसुखं न वस्तुमात्रतन्त्रकम् ।
किन्तु भोक्तुर्नरस्यापि तन्त्रंतद्वर्त्ततेतराम् ॥२८॥
अतश्च भोक्तृभूतेषु पुरुषेष्वपि निश्चितम् ।
सुखदुःखोत्पादकञ्च स्वरूपं मन्यते समैः ॥२९॥
अनादिकालमारभ्य तच्च किं तत्र वर्तते ।
मध्य एवोत किं कैश्चिन्निमित्तैरुपजायते ॥३०॥

इति निर्णेतुमनसा पुरुषेण मुमुक्षुणा।
भोग्यस्य चैव स्वस्यापि मूलं ज्ञातव्यमिष्यते ॥३१॥
अतएव मुमुक्षूणां चिदचिन्मिश्रिते भवे।
स्वभावात्तत्त्वबोधाय प्रवृत्तिर्जायतेतराम् ॥३२॥
इतिदर्शनसिद्धान्तमञ्जूषायांमोक्षसाधनविचारोनाम
ऊनविंशोऽध्यायः ॥

## श्रौतानि तत्त्वानि

तत्तद्दर्शनकारैश्च स्वस्वबुद्ध्यनुसारतः।
तत्त्वानि भिन्नभिन्नानि स्वीकृतानि स्वदर्शने ॥ १ ॥
तथापि श्रुतिप्रोक्तेषु तत्त्वेषु नैव कस्यचित्।
विवादो दृश्यते प्रायः श्रुतेर्मान्यत्वहेतुना ॥ २ ॥
तत्त्वान्वेषणकुशलाः प्रेक्षावन्तो हि मानवाः।
स्थूलं विशेषं मूर्तञ्च ह्यर्थमालोच्य यत्नतः ॥ ३ ॥
तत्कारणीभूतमर्थं सूक्ष्मं सामान्यरूपकम्।
अमूर्तञ्च भवेत् कीदृग् विचारेऽस्मिन् समुत्थिते ॥ ४ ॥
निसर्गतः प्रवर्तन्ते तत्त्वनिश्चयहेतवे।
एवं नैसर्गिको लोके व्यवहारो हि दृश्यते ॥ ५ ॥
कार्यकारणभावे च ज्ञापिते सुलभा भवेत्।
इयमालोचना प्रेक्षावतां नास्त्यत्र संशयः ॥ ६ ॥
इत्यभिप्रेत्य तज्ज्ञप्त्यै श्रुत्या सृष्टिक्रमोपि च।
ब्रह्मादिस्थूलपर्यन्तं सम्यग्रूपेण वर्णितः ॥ ७ ॥

अयं सृष्टिक्रमोऽप्येकविध एवास्ति सर्वथा ।
भिन्नभिन्नप्रकारेण केवलं वर्णितस्तथा ॥ ८ ॥

गजस्वरूपमन्धस्य बोधनीयं भवेद् यदि ।
त्वक्काठिन्यादिद्वारैव बोध्यते तद्विपश्चिता ॥ ९ ॥
नहि श्वेतञ्च कृष्णञ्च रूपं बोधयितुं पुमान् ।
कश्चिच्छक्नोति सहसाऽसम्भवत्वेन हेतुना ॥ १० ॥

स्त्रीबालादिप्रभेदेन बोद्धारः सन्त्यनेकधा ।
तेषां प्रबोधसौकर्य्यं यथा जायेत निश्चितम् ॥११॥
तथा वक्त्रैक एवार्थो भिन्नभिन्नप्रकारतः ।
तत्प्रसङ्गानुरोधेन सुलभं प्रतिपाद्यते ॥१२॥

कालिदासप्रभृतिभिः सर्वैर्हि कविपुङ्गवैः ।
सूर्योदयादिरेकोऽर्थः भिन्नभिन्नप्रकारतः ॥१३॥
याथातथ्येन सौलभ्याद् बोद्धृणां बोधहेतवे ।
वर्णितः स्वनिबन्धेषु श्रुत्या सृष्टिक्रमस्तथा ॥१४॥
सृष्टिश्रुतीनां सर्वासां श्रीव्यासेनैकवाक्यता ।
द्वितीयाध्यायोत्तरार्धे ब्रह्मसूत्रे प्रदर्शिता ॥१५॥
सृष्टिक्रमानुसारेण श्रुत्युक्तानिह यानि वै ।
तत्त्वानि तानि दर्श्यन्ते संक्षेपेण मयात्र वै ॥१६॥

पृथ्वी जलं तथा तेजो वायुराकाशमेव च ।
पञ्चभूतानि श्रुतिषु वर्णितानि महर्षिभिः ॥१७॥
शब्दः स्पर्शश्च रूपञ्च रसोगन्धश्च पञ्च वै ।
तन्मात्राः कथिताः श्रुत्यां ज्ञातव्यास्ताः प्रयत्नतः ॥१८॥

श्रोत्रत्वगक्षिरसना-घ्राणाख्यान्यपि पञ्च वै ।
ज्ञानेन्द्रियाणि प्रोक्तानि मनस्तत्प्रेरकं तथा ॥१६॥
वाक् पाणिपादपायूपस्थाभिधानानि पञ्चवै ।
कर्मेन्द्रियाणि प्रोक्तानि प्राणोऽधिष्ठानसंज्ञकः ॥ २० ॥
बुद्धिस्तथा महानात्मा ह्यव्यक्तं पुरुषस्तथा ।
श्रुतावुक्तानि तत्त्वानि ज्ञातव्यानि विशेषतः ॥ २१ ॥
कार्यकारणभावोऽपि श्रुत्या तत्त्वेषु दर्शितः ।
कार्यं कारणदृष्ट्यैव समालोच्यं तथा सति ॥ २२ ॥
एवं समालोचयतां सर्वकारणकारणम् ।
साक्षात्कृतो हि भवति परमात्मा विपश्चिताम् ॥ २३ ॥
इन्द्रियेभ्यः परा अर्था अर्थेभ्यश्च परं मनः ।
इत्यादि पौर्वापर्यञ्च श्रुत्या शास्त्रेषु वर्णितम् ॥ २४ ॥
यथाहि देवदत्तस्य गृहं देवालयात्परम् ।
इत्युक्तेऽपि च तद् गेहं तावज्ज्ञातुं न शक्यते ॥ २५ ॥
यावद्देवालयज्ञानं नैव तस्य प्रजायते ।
तथेन्द्रियेषु ज्ञातेषु ज्ञायन्तेऽर्थास्ततः पराः ॥ २६ ॥
तज्ज्ञानाच्चपरं तेभ्यो मनो ज्ञातं भविष्यति ।
एवं पूर्वस्य दृष्ट्याहि परमालोच्यते यदा ॥ २७ ॥
तदैव सर्वतत्त्वेभ्यः परमात्मा परोप्यसौ ।
साक्षात्कृतो हि भवति नात्रसन्देहसम्भवः ॥ २८ ॥
बाह्ये वस्तुनि विज्ञाते तदन्तःस्थं हि बुध्यते ।
इत्याशयेन भगवान् सर्वान्तःस्थो निरूपितः ॥ २९ ॥